अथ नारीणां दोषानाह कविः—

अग्राह्यं हृदयं यथैव वदनं यद्दर्पणान्तर्गतं
भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते ।
चित्तं पुष्करपत्रतोयचपलं[१] विद्वद्भिराशंसितं
नारी नाम विषाङ्कुरैरिव लता दोषैः समं वर्धिता ॥ ५० ॥

नाम इति संबोधने । नारी दोषैः समं वर्धिता वर्तते । नारी केव ? । लतेव वल्लीवद् । यथा लता विषाङ्कुरैः विषप्ररोहैः समं वर्धिता भवति । कथम् ? । यस्या नार्या हृदयं अग्राह्यं वर्तते ग्रहीतुं अशक्यम् । यथा शब्दो इवार्थे वर्तते । नारीहृदयं क( कि )मिव ? । दर्पणान्तर्गतं आदर्श-प्रतिबिम्बितं वदनमिव । एव निश्चयेन । यथा दर्पणान्तर्गतं वदनमग्राह्यं ग्रहीतुमशक्यं तथा तस्या हृदयमपि । तु पुनः । स्त्रीणां नारीणां भावश्चित्ताभिप्रायो न विज्ञायते नावगम्यते । किं० भावः ? । पर्वतसूक्ष्ममार्गविषमः । पर्वतस्य सूक्ष्ममार्गः पर्वतसूक्ष्ममार्गः, अगम्यमार्ग इत्यर्थः । तद्वद्विषमः पर्वतसूक्ष्ममार्गविषमः । यस्याः नायिकायाः चित्तं विद्वद्भिः पण्डितैः पुष्कर-पत्रतोयचपलं आशंसितं कथितम् । अतः कारणात् नारी दोषवसतिः ( छ. °तिगृहं ) प्रोच्यते ॥ ५० ॥

अथात्मसंबोधनमाह कविः—

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधु पदवीं सेवस्व विद्वज्जनान् ।
मान्यान् मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां चेष्टितम् ॥५१॥

रे चेतः ! । तृष्णां छिन्धि निराकुरु । क्षमां भज । मदं जहि त्यज । रतिं पापे मा कृथाः । सत्यं ब्रूहि । साधुपदवीं अनुयाहि अनुगमनं कुरु । विद्वज्जनान् सेवस्व । मान्यान् पूज्यान् मानय पूजय । विद्विषोऽपि अनुनय प्रसादय । स्वान् स्वकीयान् गुणान् प्रच्छादय आवृणु । कीर्तिं पालय । दुःखितेषु जनेषु दयां कुरु । सतां साधूनां एतच्चेष्टितम् । अस्मिन् मार्गे साधवो गच्छन्तीत्यागमः ॥ ५१ ॥

अथाधैर्यशिष्या(क्षा)माह कविः—

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन ।

---

१. घ. तथैव । २ घ. °णान्तः स्थितम् । ३ घ. तरलं । ४ क. कार्यमदौ ।

अतिरभसकृतानां कर्मणामाविपत्तेर्
भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ५२ ॥

पण्डितेन मनुष्येण यत्नतः कार्याणां परिणतिरवधार्या परिणामश्चिन्तनीयः। पण्डितेन किं कुर्वता ?। कार्यजातं कर्तव्यसमूहं गुणवद् गुणसहितं अगुणवद् गुणरहितं कुर्वता। इदं परिणामसुन्दरं इदमपरिणामसुन्दरं इति विचारं कुर्वता। कथमिति ?। अतिरभसकृतानां कर्मणां अत्युत्सुकतया समाचरितकार्याणां हृदयदाही मानसदाहात्मकः शल्यतुल्यो विपाको भवति। तस्य कर्मणो हृदयदाहं दुःखं भवति ॥ ५२ ॥

एको देवः केशवो वा जिनो वा एका भार्या सुन्दरी वा दरी वा।
एकं मित्रं भूपतिर्वा यतिर्वा एको वासः पत्तने वा वने वा ॥ ५३ ॥

सुगमम् ॥

अधुनोपदेशस्तावकमर्थमाह कविः–

स्थाल्यां वैडूर्यमय्यां पचति तिलखलं चान्दनैरिन्धनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कतूलस्य हेतोः।
छित्त्वा कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्तात्
प्राप्येमां कर्मभूमिं विचलति मनुजो यस्तपो मन्दभाग्यः ॥५४

यो मन्दभाग्यो मनुजस्तपो विचलति (ट. न चरति)। किं कृत्वा ?। इमां कर्मभूमिं प्राप्य। स किं कुरुते ?। वैडूर्यमय्यां मरकतमणिसमुद्भवायां स्थाल्यां हण्डिकायां तिलखलं पचति। ननु रे मूढ! वैडूर्यमय्या स्थाल्यां किं तिलखलः पच्यते ?। एतावता ॥ एष मूढो यत्ना-दविधायां स्थाल्यां तादृक्कर्म करोति। कैः ?। चान्दनैरिन्धनौघैः चन्दनसमुद्भवकाष्ठसमूहैः। ॥ सौवर्णैर्लाङ्गलाग्रैः अर्कतूलस्य हेतोः वसुधां धरणीं (क. छ. भूमिं) विल(छ. 'लि)खति। ननु मूर्ख। सौवर्णैर्लाङ्गलाग्रैः अर्कतूलस्य हेतोः त्वामन्तरेण कश्चिद् वसुधा विल(छ. 'लि)खति। स मूढः कर्पूरखण्डान् छित्त्वा समन्तात् चतुर्दिशं इह अस्मिन् जीवलोके कोद्रवाणां वृत्तिं (वृतिं) रक्षणवृतिभित्तिं कुरुते। इह पुण्यमयं क्षेत्रं प्राप्य प्रत्यहं पापं कुरुते ॥ ५४ ॥

कविः सुकृतस्य माहात्म्यमाह–

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः स्वजनतामुपयाति तस्य।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ५५ ॥

---

१ इं चान्दनैर। २ च. छ. 'मूलस्य। ३ घ. 'खण्डं। ४ घ. न चरति। ५ इं. यस्तपो। ६ क. ग. घ. सुजनताम्। ७ घ. निफलं।

यस्य नरस्य विपुलं विस्तीर्णं पूर्वसुकृतं पुरा कृतं पुण्यं अस्ति । तस्य पुंसः भीमं वनं पुरं नगरं भवति । किं पुरम् ? । प्रधानम गढमढमन्दिरप्राकारसहितम् । तस्य पुंसः सर्वो जनो निखिललोकः स्वजनतां मित्रतां याति प्राप्नोति । च अन्यत् । कृत्स्ना [हिं. कृष्णा] भूः समस्ताऽपि वसुंधरा सन्निधिरत्नपूर्णा भवति । सन्नधानानि निधीनि संनिधीनि, सन्निधीनां रत्नैः पूर्णा सन्निधिरत्नपूर्णा । सन्निधानरत्नैः संभृता इत्यर्थः । अत एव प्राणिनां पूर्वकृतपुण्यमेव विलोक्यते ॥ ५५ ॥

पुनः पुण्यप्रभावमाह कविः—

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥ ५६ ॥

प्राणिनां पुरा कृतानि पुण्यानि रक्षन्ति । कं प्राणिनम् ? । सुप्तं प्रमत्तम् । वा अथवा विषमस्थितम् । क ? । वने रणे । पुनः क ? । शत्रुजलाग्निमध्ये । पुनरपि क ? । महार्णवे पर्वतमस्तके वा ॥ ५६ ॥

अथ कविः कर्मस्वभावमाह—

मज्जत्वम्भसि यातु मेरुशिखरं शत्रुं जयत्वाहवे
वाणिज्यं कृषिसेवनादि सकला विद्याः कलाः शिक्षतु ।
१ आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं पुन-
र्नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ ५७ ॥

इह अस्मिन् जीवलोके अभाव्यं न भवति । कर्मवशतो भाव्यस्य पदार्थस्य कुतो नाशः ? । अम्भसि पानीये ( च. ट. जले ) मज्जतु झम्पां ददातु । अन्यच्च । प्राणी मेरुशिखरं सुरगिरिशृङ्गं यातु । आहवे संग्रामाङ्गणे शत्रुं वैरिणं जयतु । वाणिज्यं करोतु । कृषिसेवनादि करोतु । सकलाः समस्ताः विद्याः कलाः शिक्षतु । पुनः पुनरपि यत्नं कृत्वा अभियोग[मुद्यमं]विधाय विपुलं आकाशं खगवत् पक्षिवत् प्रयातु गच्छतु । तथाप्यभाव्यं न भवति ॥ ५७ ॥

अथ विनेर्नीतिमाह कविः—

वरं प्राणच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ ५८ ॥

अहह इति खेदे । तुषाराद्रेः सूनोः हिमाचलस्य पुत्रस्य मैनाकस्य पयसां पत्युः समुद्रस्य पयसि पानीये संपातो निपातो नोचितः । क सति ? । पितरि हिमाचले क्लेशविवशे

१. च °संकटे । २. ग. घ. विषमं ।

सति दुःखविह्वले सति । समदमघवन्मुक्तकुलिशप्रहारैः प्राणच्छेदो वरं जीवनाशो वरम् । समदो मदसंयुक्तो योऽसौ मघवा इन्द्रः तेन मुक्ताः ये कुलिशप्रहाराः वज्राघाताः, तैः । किं० कुलिशप्रहारैः ? । उद्गच्छद्बहुलदहनोद्गारगुरुभिः ऊर्ध्वं गच्छन्तो ये बहुलाः प्रचुराः दहनस्य वैश्वानरस्य उद्गाराः तैरुद्गारैर्गुरवः प्रबलास्ते, तैः । परं तथापि जनके क्लेशनिमग्ने सति स्वयमात्मरक्षाय (यै) समुद्रे पतितुं न युक्तम् ॥ ५८ ॥

अधुना कविर्दैवगतिं प्राह—

नेता यत्र बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वारणः ।
इत्यैश्वर्यबलान्वितोऽपि मघवान् भग्नः परैः संगरे
तद् व्यक्तं ननु दैवमेव शरणं धिग् धिग् वृथा पौरुषम् ॥५९॥

मघवान् (छ. बलभिद्) इन्द्रः संगरे संग्रामे परैर्वैरिभिः भग्नः । किं० मघवान् ? । इति प्रोच्यमानः । ऐश्वर्यबलान्वितोऽपि स्वामित्वसैन्य(हं. सौम्य)संयुक्तोऽपि । यस्य मघवतो बृहस्पतिर्नेता शिष्या (क्षा)दाता । यस्य मघवतः प्रहरणं शस्त्रं वज्रम् । यस्य मघवतः सैनिकाः सेनाचराः सुराः देवाः । यस्य मघवतो दुर्गो (ट. दुर्गं) वप्रः स्वर्गः । खलु निश्चितम् । हरेः श्रीवासुदेवस्य अनुग्रहः प्रसादः । यस्य मघवतः ऐरावणो वारणो गजः । तथापीन्द्रो दैत्यैर्भग्नः । किं कारणम् ? । तत् तस्मात्कारणात् । ननु निश्चितं व्यक्तं प्रकटं दैवमेव शरणम् । धिग् धिग् वृथा पौरुषम् । एतावता दैवात् समर्थः कोऽपि नास्ति ॥ ५९ ॥

अथ व्यवसायाधिक्यमाह कविः—

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ६० ॥

पुंसां पुरुषाणां फलं कर्मायत्तं वर्तते । बुद्धिः कर्मानुसारिणी वर्तते । तथापि सुधिया पुंसा सुविचार्यैव कुर्वता भाव्यं विचार्य विचार्य कार्यं कार्यम् ॥ ६० ॥

अन्यच्च—

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः ।
नास्त्युद्यमात् परो बन्धुर् यं कृत्वा नावसीदति ॥ ६१ ॥

हि निश्चितम् । मनुष्याणां महारिपुरालस्यं प्रमादो वर्तते । किं० प्रमादः ? । शरीरस्थः । उद्यमात्परो व्यवसायादन्यो बन्धुर्बान्धवो नास्ति । किं कृत्वा ? । प्राणी यं उद्यमं बन्धुं कृत्वा । न अवसीदति न दुःखी भवति ॥ ६१ ॥

---

१ ज. पंरपवतो । २ हं. रावणः; घ. वाहनः । ३ घ. समन्वितो । ४ छ. घ. बलभिद्; ग. बलिभिद्; ज. मघवा । ५ ग. तद्युक्तं । ६ ग. च. °म परो; घ. °मसमो । ७ घ. कृत्वा यं ।

४ शतक०

अथ मूर्खजनसंसर्गफलमाह—

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।

मा मूर्खजनसंसर्गः सुरेन्द्रभवनेष्वपि ॥ ६२ ॥

पर्वतदुर्गेषु वनचरैः सह शशक-संबर-हरिणप्रमुखैः सह वने भ्रान्तं वरम् । मूर्खजनसंसर्गः सुरेन्द्रभ(च. ट. मु.)वनेषु इन्द्रसभायाम् अपि न वरम् । एतावता विद्वज्जनसंसर्ग एव प्रधानः ॥ ६२ ॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।

यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ ६३ ॥

इति सुगमार्थः ॥ ६३ ॥

अथ काञ्चनगुणानाह कविः—

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।

स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥६४॥

सर्वे गुणाः काञ्चनं सुवर्णं आश्रयन्ति । कथम् ? । यस्य पुंसः वित्तं सुवर्णमस्ति स नरः अकुलीनोऽपि कुलीनः । यस्य वित्तमस्ति सः अपण्डितोऽपि पण्डितः । यस्य वित्तं स मूर्खोऽपि श्रुतवान् विद्वान् । यस्य वित्तं सोऽविनीतोऽपि विनीतः । यस्य वित्तं सः अवक्तापि वक्ता । यस्य वित्तं सः अदर्शनीयोऽपि कुरूपोऽपि दर्शनीयः । अतः कारणात् सर्वे गुणाः वित्तवति भवन्ति ॥ ६४ ॥

अथ धीरत्वमाह कविः—

रत्नैर्महार्घैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।

सुधां विना न प्रययुर्विरामं न निश्चितार्थाद् विरमन्ति धीराः ॥ ६५ ॥

महार्घैः बहुमूल्यैः रत्नैः पदार्थैः देवा न तुतुषुः न जहृषुः [ जहृषुः ] । देवा भीमविषेण रौद्रगरेण भीतिं न भेजिरे । देवाः सुधां विना विरामं न प्रययुः विरतिं न प्रापुः । कथं० धीरा ? । प्राणिनो निश्चितार्थात् सत्यार्थात् न विरमन्ति न व्याघुटन्ति ॥ ६५ ॥

अथ सत्पुरुषां प्रकृतिमाह कविः—

सन्त्यन्येऽपि बृहस्पतिप्रभृतयोऽसंभाविनः पञ्चषास्

तान् प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।

द्वावेव ग्रसते दिनेश्वर-निशाप्राणेश्वरौ भास्करौ

भ्रातः ! पर्वणि पश्य दानवपतिः शीर्षावशेषाकृतिः ॥ ६६ ॥

---

१ इं. 'भुवने' । २ घ. श्रुतिमान् । ३ घ. युक्ता । ४ च. जनाः । ५ क. ग. घ. च. छ. ज. महार्हैः । ६ घ. निविश्चिता । ७ ग. घ. संभाविनाः । ८ घ. भास्वरौ ।

हे भ्रातः! पश्य पश्य अवलोक्यावलोक्य। दानवपती राहुः। पर्वणि सूर्यचन्द्रग्रहणे (ग्रहण-) समये द्वावेव ग्रसते। द्वौ कौ?। दिनेश्वरनिशाप्राणेश्वरौ सूर्याचन्द्रमसौ। किं० दिनेश्वर-निशाप्राणेश्वरौ?। भास्करौ दीप्तिकरौ। अन्येऽपि बृहस्पतिप्रभृतयः पञ्चषा वर्तन्ते पञ्चषट् संख्या येषां ते पञ्चषाः?। एष (क. छ. एषो) राहुः तान् प्रति सोमयमगुरुशुक्रादीन् प्रति वा मङ्गल-बुध (क. च. छ. 'बुद्ध) गुरुशुक्रशनिप्रभृतीन् प्रति न वैरायते न वैरं करोति। ग्रसते द्वयोः सूर्याचन्द्रमसोरेव। किं० दानवपती राहुः?। शीर्षावशेषाकृतिः शीर्षमेव मस्तकमेव अवशेषा आकृतिः शरीरं यस्य सः। शरीरं मूलतो नास्ति। एकेन शीर्षेणैव सूर्या(च. ट. सूर्य)चन्द्रमसौ सर्वदा निगलितौ॥ ६६॥

श्रोत्रं[1] श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन।
आमोति कायः करुणापराणां परोपकारेण न चन्दनेन॥ ६७॥

श्रोत्रं श्रवणं एव निश्चयेन। श्रुतेन शास्त्रेण आभाति। कुण्डलेन न कर्णाभरणेन न। तथा तेन प्रकारेण पाणिर्हस्तो दानेन आभाति शोभते। न तु कङ्कणेन। करुणापराणां दयापराणां कायः परोपकारेण आभाति न चन्दनेन। महतां मण्डनं बाह्यमण्डनादपि अभ्य-न्तरं महत्॥ ६७॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजन्मभीः॥ ६८॥

ते सुकृतिनः पुण्यवन्तो जयन्ति। रससिद्धाः कवीश्वराः जयन्ति सर्वोत्कर्षेण वर्तन्ते। कथम्?। येषां सुकृतिनां कवीश्वराणामपि यशःकाये जरामरणजन्मभीर्नास्ति। जरा च मरणं च जन्म च जरामरणजन्मानि, तेषां भीः जरामरणजन्मभीः। येषां यश शरीरं निश्चलं तेषां जरा-मरणभीः का?॥ ६८॥

अथ तत्त्ववित् प्राह कविः—

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत् प्राप्नोषि[3] मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकम्।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम्॥ ६९॥

हे प्राणिन्!। तत् तस्मात्कारणात् धीरो भव। किमुत्सुकत्वेन?। तस्मात् कस्मात्?। धात्रा विधात्रा यत् स्तोकं वा महद् धनं निजभालपट्टलिखितं वर्तते। तत् प्राप्नोषि (ट. 'ति)। मरुस्थलेऽपि नीरप्रदेशेऽपि। परं नितरां अतिशयेन चेदधिकं वाञ्छसि तदा मेरौ सुरगिरावपि

१ प. श्रुतं। २ घ. विभाति। ३ ग. घ. प्राप्नोति।

अतो नाधिकम् । तत् तस्मात्कारणात् धीरो भव । वित्तवत्सु धनवत्सु कृपणां वृत्तिं लोभवृत्तिं मा कृथाः । नो चेन्मन्निवेदितं मन्यसे तदा पश्य पश्य । कूपे, अपि पुनः । पयोनिधौ घटः कुम्भ तुल्यं जलं गृह्णाति । स्वमरणान्नाधिकम् । यादृशं भरणं तादृशं भाग्यम् । भाग्यादधिकं कापि किमपि न प्राप्यते । तत्त्वमिदम् ॥ ६९ ॥

अथ धीराधीरयोः स्वरूपमाह कविः —

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ७० ॥

श्वा भषणः । पिण्डदस्य लेहनदायकस्य लाङ्गूलचालनं पुच्छो(ह लो)लन कुरुते । च अन्यत् । अधश्चरणावपातं कुरुते । श्वा पिण्डदस्य वदनोदरदर्शनं च कुरुते । वदनं चोदरं च वदनोदरं तयोर्दर्शनं वदनोदरदर्शनम् । किं कृत्वा ? । भूमौ निपत्य । तु पुनः । गजपुङ्गवो गजेन्द्रो धीरं विलोकयति । च अन्यत् चाटुशतैः भुङ्क्ते । एवं धीराधीरयोः स्वरूपं भवति ॥७०॥

अथ राजशिष्या(क्षा)माह कविः —

राजन् ! दुधुक्षसि यदि क्षितिधेनुमेनां
तेनाद्य (?) वत्समिव लोकममुं पुषाण ।
तस्मिंस्तु सम्यगनिशं परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः ॥ ७१ ॥

हे राजन् ! यदि चेत् । एनां क्षितिधेनुं दुधुक्षसि दोग्धुमिच्छसि । तेन कारणेन अमुं लोकं पुषाण । 'पुष पुष्टौ' । प्रजापोषणं कुरु । कमिव ? । वत्समिव । यथा धेनुं दोग्धुकामः पुमान् वत्सं तर्णकं पुष्णाति प्रतिपालयति । तु पुनः । लोकवत्सं (छ ?त्से) अनिशं निरन्तरं सम्यक् परिपोष्यमाणे भूमिकामधेनुः नानाफला फलति । केव ? । कल्पलतेव । यथा कल्पलता परिपोष्यमाणा सती नानामनोरथफलं फलति ॥ ७१ ॥

अथ नृपनीतिस्वरूपमाह कविः —

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ७२ ॥

---

१ क छ या । २ घ ज एना । ३ क ग घ तेनाद्य । ४ ग घ इम । ५ ग तस्मिंश्च । ६ ग घ नानाफलैः । ७ ग कामदुघा । ८ ग पुरुषा । ९ ग °समागमा ।

नृपनीतिरनेकरूपा वर्तते। किं० नृपनीतिः?। सत्यानृता सत्या चानृता च सत्यानृता। हंहो या सत्या सा अनृता कथम्?। अनृता सा सत्या कथम्?। परस्परविरोधः। अथ विरोधपरिहार इत्थम्। न भो या राजनीतिः सत्याप्युच्यते अनृता चालीकानामपि मन्दिरम्। पुनः किं० राजनीतिः?। परुषा। च अन्यत् प्रियवादिनी। ननु या परुषा कठोरा सा प्रियवादिनी कथम्?। या प्रियवादिनी सा कठोरा कथम्?। अत्रापि परस्परविरोध.। नेत्थं भो या राजनीतिः परुषा कठोरापि कठोरवाक्यानि प्रोच्यन्ते। अन्यच्च प्रियवादोऽप्युच्यते। इति विरोधपरिहारः। पुनरपि किं० राजनीतिः?। हिंस्रा मारणात्मका। अपि पुनः। दयालुः। हहो या हिंस्रा सा दयालुः कथम्?। या दयालुः सा हिंस्रा कथम्?। अत्रापि विरोधः। अथ विरोधपरिहार एवम्—या राजनीतिः हिंस्रा हिंसामन्तरेण न भवति। दयालुरपि भवति। पुनरपि किं० राजनीतिः?। अर्थपरा च अन्यत्। वदान्या दानशीला। ननु भो। या अर्थपरा अर्थपरायणा सा वदान्या दात्री कथम्?। या दात्री सा अर्थपरा कथं स्यात्?। इहापि विरोध.। अथ विरोधपरिहारः एवम्—न हि। या नृपनीतिरर्थपरा अर्थसंग्रहशीला। तया च वदान्या दानशीला रोरविहण्डिनी [दारिद्र्यखण्डिनी]। पुनरपि किं० नृपनीतिः?। नित्यव्यया चान्यत् प्रचुरनित्यधनागमा। कोऽर्थः?। निरन्तरं नित्यम्। निरन्तरं व्ययो यस्या सा नित्यव्यया। प्रचुरो नित्यं धनागमो यस्यां सा प्रचुरनित्यधनागमा। ननु भो विद्वन्! या नित्यव्यया सा प्रचुरनित्यधनागमा कथम्?। या प्रचुरनित्यधनागमा सा नित्यव्यया कथम्?। अत्रापि परस्परं वाक्ययोर्विरोध.। अथ विरोधसंक्षेप.। ननु या राजनीतिः नित्यव्यया भवति प्रचुरनित्यधनागमापि भवति। नृपनीतिः केव?। वाराङ्गनेव। यथा वाराङ्गना अनेकरूपा भवति। यथा वाराङ्गना अनृतापि सत्यापि भवति। परुषापि प्रियवादिनी भवति। अपि पुन. हिंस्रा दयालुर्भवति। अर्थपरा लोभिन्यपि वदान्या दायिनी भवति। नित्यव्ययापि प्रचुरनित्यधनागमा भवति। यादृशी वाराङ्गना तादृशी नृपनीतिरुदाहृता॥ ७२॥

अथ भूपानां नैर्गुण्यतामाह कवि.—

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम्।
होतारं[1] जुह्वतमपि स्पृष्टो दहति पावकः॥ ७३॥

नाम इति संबोधने। चण्डकोपानां अत्यन्तक्रोधिना भूभुजां राज्ञा कश्चिदात्मीयो न। अमुनेवार्थं कविर्दृष्टान्तेन द(ट. ढ़)ढयति—पावको वैश्वानरो होतारमपि अग्निहोत्रिणमपि दहति। किं० होतारम्?। जुह्वतमपि आहुतिं ददतमपि॥ ७३॥

अथ विधेस्तिरस्कारमाह कवि.—

विरम विरसायासादस्माद् दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे।

---

१ घ. होतारमपि जुह्वन्तं।

अपि जडविधे ! कल्याणाय व्यपेतनिजक्रमाः

कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ ७४ ॥

हे जडविधे हे मूर्खदैव ! अस्माद्दुरध्यवसायतो दुष्टाभिप्रायतो **विरम** विरतिं भज । कि० दुरध्यवसायत ? । **विरसायासात्** । विरसो विरक्तो आयामो यस्य स विरसायास, तस्मात् । **हे विधे ! यत्त्वं विपदि** कष्टे सति **महतां** धैर्यध्वंसं साहसविनाशं **ईक्षितुमीहसे** विलोकयितु वाञ्छसि । हे जडविधे ! एते **कुलशिखरिणः** कुलगिरय वा अथवा **जलराशयः** समुद्रा **क्षुद्रा न** अणवो न । कि० कुलशिखरिण तथा जलराशय ? । **कल्याणाय व्यपेतनिजक्रमाः** स्वकीय अनुक्रमा । एतावता महता साहसव्यपगम धैर्यध्वंस न कोऽपि कर्तुं क्षम ॥ ७४ ॥

अथ दुरात्मना प्रकृतिमाह कवि –

अकरुणत्वमकारणविग्रहः परधनाय रतिः परयोषिति ।

स्वजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥७५॥

**हि** निश्चितम् । दुरात्मना **इदं प्रकृतिसिद्ध** सहजसपन्नम् । इद किम् ? । **अकरुणत्वं** निर्दयत्वम् । दुरात्मना सहजेन अकरुणत्व भवति । अन्यच्च । दुरात्मना **अकारणविग्रहो** भवति । तथा दुरात्मना **परधनाय रतिर्भवति** परधनहरणे सतोषो भवति । अपर **स्वजनबन्धुजनेषु** कुटुम्बवर्गेषु **असहिष्णुता** भवति मत्सर स्यात् ॥ ७५ ॥

अथ धीरस्य धीरत्वमाह कवि –

कान्ताकटाक्षविशिखा न खनन्ति यस्य

चित्त न निर्दहति कोपकृशानुतापः ।

कर्षन्ति भूरिविषयाश्च न लोभपाशा

लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ ७६ ॥

[illegible] **धीरः इदं कृत्स्नं** समस्त **लोकत्रयं जयति** जयनशीलो भवति । **यस्य** सत्पुरुषस्य **कान्ताकटाक्षविशिखा** प्रियाकटाक्षबाणा । **चित्त न खनन्ति** । 'खन विदारणे' । न विदारयन्ति । अन्यच्च यस्य चित्त **कोपकृशानुतापः** क्रोधवैश्वानरतापः । **चित्त न निर्दहति** न प्रज्वालयति । चान्यद् **लोभपाशा न कर्षन्ति** नाक्रमन्ति । कि० लोभपाशा ? । **भूरिविषयाः** भूरि प्रचुरो विषयो गोचरो येषा ते भूरिविषया । त एव धन्या येषामेते विशेषा प्रधन ( च ट प्रधान ) सान्ति ॥ ७६ ॥

अथ खल-सज्जनयो प्रीते स्वरूपमाह कवि –

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।

दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खल-सज्जनानाम् ॥ ७७ ॥

---

१ क. [illegible] क्षुद्रो । २ ग परधनापहृतिः परयोषित । ३ ग प्रकृत° ।

खल-सज्जनानां मैत्री दिनस्य पूर्वार्ध-परार्धतुल्या वर्तते । यथा दिवसस्य पूर्वार्धपरार्धे वर्तेते । तथा खलसज्जनानां मैत्रीति तात्पर्यम् । कथम् ? । खलस्य मैत्री आरम्भगुर्वी क्रमेण शनैः शनैः क्षयिणी क्षुत्वशीला । सज्जनस्य मैत्री पुरा पूर्वं लघ्वी पश्चात् शनैः शनैः वृद्धिमती वर्धनशीला । इति दुर्जन-सज्जनयोः प्रीतेः स्वभावः ॥ ७७ ॥

पुनः सत्पुरुषचेष्टितमाह कविः—

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्या निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ७८ ॥

सतां सत्पुरुषाणां इदं असिधाराव्रतं खड्गधारोपमव्रतम् । केनोद्दिष्टम् । किं० व्रतम् ? । दुष्करम् । इदं किम् ? । प्रच्छन्नं गुप्तं प्रदानं निर्घोषदानम् । अन्यच्च गृहं उपगते पुरुषे संभ्रम-विधिः आदरक्रिया । पुनः प्रियं कृत्वा मौनम् । चान्यत् उपकृतेः सदसि सभायां कथनम् । अपरं किम् ? । लक्ष्म्या अनुत्सेको ( क. हं. च. अनुच्छेदो ) निरहंकारता । पुनः किम् ? । परकथा निरभिभवसाराः, अपरा भवसाराः । सतां सत्पुरुषाणाम् इदं व्रतम् ॥ ७८ ॥

पुनः सतां चेष्टितमिदम्—

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः संतप्यन्ते न[१] ते विपदा ॥ ७९ ॥

ते सन्तो विपदा न संतप्यन्ते न दुःखिनो भवन्ति । सन्तः किं कुर्वन्तः ? । इति विमृशन्तः इत्थं विचिन्तयन्तः । इतीति किम् ? । तरुर्वृक्षः छिन्नोऽपि रोहति उद्गच्छति । चन्द्रः शशी क्षीणोऽपि क्षयं यातोऽपि पुनरुपचीयते वृद्धिं प्राप्नोति । इति विमर्शनां कुर्वन्तः सन्तो विपदि कष्टेऽपि सति नो दीनमानसा भवन्ति ॥ ७९ ॥

भवन्ति नम्रास्तरवः फलोद्गमैर्[३] नवाम्बुभिर्भूरि[४]विलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ८० ॥

परोपकारिणां परकार्यनिरतानां एष स्वभाव एव सहजमेव । यत्तु सत्पुरुषाः समृद्धिभिः संपद्भिः अनुद्धताः भवन्ति अनुत्सेका भवन्ति । [ युक्तमिदं तरवो वृक्षाः फलोद्गमे फलकाले नम्रा भवन्ति नमनशीलाः स्युः । घना मेघाः अम्बुभिः पानीयैः भूरिविलम्बिनो न भवन्ति ] प्रचुरमार्गातिक्रमिणो न भवन्ति । यतः 'परोपकाराय सतां विभूतयः' इति रहस्यम् ॥ ८० ॥

---

१ ग. °नीया । २ ग. न. पिशुनेऽपि । ३ घ फलोद्गमैर ४ भूमि ।

पद्माकरं दिनकरो विकचं करोति चन्द्रो विकाशयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहितेषु कृताभियोगाः॥८१॥

सन्तः सत्पुरुषाः परहितेषु परकार्येषु स्वयं कृताभियोगा भवन्ति कृतोद्यमाः स्युः । यथा दिनकरः सूर्यः पद्माकरं कमलवनखण्डं विकाशं विकस्वरं करोति । चन्द्रः कैरवचक्रवालं कुमुदिनीवृन्दं स्वयं विकाशयति । अपि पुनः । जलधरो नाभ्यर्थितोऽपि अयाचितोऽपि जलं ददाति । तथा सत्पुरुषाः स्वयमेव परकार्यपरायणाः भवन्ति ॥ ८१ ॥

अधुना शीलप्रतिपालनयत्नस्वरूपमाह कविः—

वरं शृङ्गोत्तुङ्गाद् वरशिखरिणः क्वापि विषमे
पतित्वाऽयं कायः कठिनदृषदन्तर्विदलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने
वरं वह्नौ पातस् तदपि न कृतः शीलविलयः ॥ ८२ ॥

प्राणिना वरशिखरिणः क्वापि विषमे पतित्वा अयं कायः कठिनदृषदन्तर्विदलितो वरं प्रधानम् । कि० वरशिखरिणः ? । शृङ्गोत्तुङ्गात् शृङ्गमुत्तुङ्गं उच्चैस्तरं यस्य सः शृङ्गोत्तुङ्गः, तस्मात् । अन्यच्च हस्तः फणपतिमुखे पन्नगवदने न्यस्तः क्षिप्तो वरम् । किं० फणपतिमुखे ? । तीक्ष्णदशने तीक्ष्णा दशना दन्ता यस्य स तीक्ष्णदशन, तस्मिन् तीक्ष्णदशने । देहिनां वह्नौ पातो ( च. छ. ट. पातो ) अग्नौ निपतनं वरं सुन्दरम् । तदपि तथापि शीलविलयः कृतो न परं न भव्य ॥ ८२ ॥

अथ सूरपुरुषस्याधिक्यमाह कवि –

एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ।
क्रियते भास्करेणेव स्फुटं स्फुरिततेजसा ॥ ८३ ॥

शूरेण शूरपुरुषेण एकेनापि महीतलं पादाक्रान्तं क्रियते । शूरेण केनैव ? । भास्करेणेव । यथा भास्करेण सूर्येण महीतलं पादाक्रान्तं किरणाक्रान्तं स्फुटं प्रकटं क्रियते विधीयते । किं० भास्करेण ? । स्फुरिततेजसा दीप्रप्रतापेन ॥ ८३ ॥

अथ धीरस्य धैर्यवृत्तिमाह कवि.—

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कथंचिदेव ॥८४॥

सुधैर्यवृत्तेः पुरुषस्य धैर्यगुणो धीरमहिमा प्रमार्ष्टुं स्फेटयितुं न शक्यते । किं० धैर्यवृत्तेः ? ।

---

१ ग. विकचा॰ । २ घ. ॰तोऽपि जलदः सलिलं ददाति । ३ घ. गुरु॰ । ४ हं. फणि॰ । ५ हं. क. छ. सूरेण । ६ ग. क्ष्मातलम् । ७ ग. स्फुरत्-; घ. स्फार- । ८ क. छ. तेजसाम् । ९ ग. घ ॰गुणं । १० ग. घ. कदाचिदेव ।

कदर्थितस्यापि विडम्बितस्यापि । अमुमेवार्थं कविर्दृष्टान्तेन दृढीकरोति—वह्नेः शिखाः ज्वालाः अधो न यान्ति नीचैर्न गच्छन्ति । किं० वह्नेः ? । अधोमुखस्यापि कृतस्य नीचैर्मुखविहितस्य ॥ ८४ ॥

अथ शीलस्य महिमा [ नम् ] आह कविः—

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ ८५ ॥

तस्य पुरुषस्य वह्निर्वैश्वानरो जलायतेऽमृतायते । तस्य पुंसः तत्क्षणात् जलनिधिः समुद्रः कुल्यायते नीकायते । तस्य पुंसो मेरुर्लक्षयोजनप्रमाणोऽपि स्वल्पशिलायते ह्रस्वशिला इवाचरति । तस्य पुंसः सद्यस्तत्कालं मृगपतिः सिंहः कुरङ्गायते मृग इव भवति । तस्य पुंसः [व्यालो] दुष्टः सर्पो माल्यगुणायते कुसुममाला इव भवति । तस्य पुंसः विषरसः पीयूषवर्षायते अमृतवर्षी इव भवति । यस्य अङ्गे यस्य शरीरे शीलं समुन्मीलति समुल्लसति । किं० शीलम् ? । अखिललोकवल्लभतमम् । अखिलश्चासौ लोकः [ अखिललोकः ], अखिललोकस्य प्रकृष्टं वल्लभं अखिललोकवल्लभतमम् । 'प्रकृष्टे तरतमौ' । तमप्रत्ययः ॥ ८५ ॥

अथ तेजस्विनः पुरुषस्य स्वरूपमाह कविः—

यद्[1]चेतनोऽपि पादैः स्पृष्टः[2] प्रज्वलति सवितु[3]रिनकान्तः ।
तत्[4] तेजस्वी पुरुषः परकृतनिकृतिं[5] कथं सहताम्[6] ॥ ८६ ॥

यद् अचेतनोऽपि इनकान्तः सूर्यकान्तः सवितुः श्रीसूर्यस्य पादैः ( द्र. किरणैः ) स्पृष्टः सन् चरणैः संघट्टितः सन् प्रज्वलति अग्निज्वाला विमुञ्चति । तत् तदा तेजस्वी पुरुषः परकृतनिकृतिं परकृतावहेलनां कथं सहताम् ? ॥ ८६ ॥

अथ दुर्जनप्रतिक्रियास्वरूपमाह कविः—

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
भेत्तुं वज्रमणीन् शिरीषकुसुमप्रान्तेन संनह्यते[7] ।
माधुर्यं मधुबिन्दुना रचयितुं क्षीराम्बुधेरीहते[8]
नेतुं वाञ्छति यः सतां पथि खलान् सूक्तैः सुधास्यन्दिभिः ॥८७॥

यो मन्दबुद्धिः [ सूक्तैः ] खलान् दुर्जनान् सतां पथि उत्तमानां मार्गे नेतुं वाञ्छति

१ क. ग. च. यदि चे° । २ ग. स्पृष्टोऽपि ज्व° । ३ च. °तुः सूर्यकान्तः । ४ घ. यत्तेजस्वी । ५ क° निकृतं । ६ घ. सहते । ७ घ. संनह्यति । ८ क. क्षीराम्बुधेरी° ।

प्रतिबोधयितुमिच्छति । कथंभूतैः सूक्तैः ? । सुधास्यन्दिभिः अमृतस्राविभिः । स किं कर्तुमिच्छति ? । असौ मूढः व्यालं दुष्टगजं बालमृणालतन्तुभिः कोमलपद्मतन्तुभिः रोद्धुं समुज्जृम्भते बद्धुं समीहते । रे मन्दमते ! व्यालं बालमृणालतन्तुभिः कश्चित् रोद्धुं समर्थो भवति ? । अपि तु न । स सरलाशयः शिरीषकुसुमप्रान्तेन सन्नच्छद्पुष्पाग्रेण वज्रमणीन् भेत्तुं हीरकरत्नं वेद्धुं संनह्यते सज्जीभवति । रे मूढ ! । वज्रमणयः शिरीषकुसुमप्रान्तेन केनापि विध्यन्ते ? । अपि तु न । स मूर्खः क्षाराम्बुधेः समुद्रस्य माधुर्यं मधुबिन्दुना रचयितुं ईहते समभिलषति । रे अज्ञान ! एकेन मधुबिन्दुना क्षारसमुद्रस्य माधुर्यं कोऽपि कर्तुं क्षमो भवति ? । अपि तु न । स दुर्जनानां( ? नान् ) प्रतिबोधयितुं समर्थः स्यात् ॥ ८७ ॥

अथ पार्थिवसेवाफलमाह कविः—

आज्ञा कीर्तिः पालनं सज्जनानां दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड् गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥८८॥

तेषां पुरुषाणां पार्थिवोपाश्रयेण नरेन्द्रसेवनया कोऽर्थः किं फलम् ? । येषां पुरुषाणामेते षड् गुणाः षाड्गुण्यता न प्रवृत्ताः । ते के षड् गुणाः ? । आज्ञा येषां नृपतिसेविनां लोकेषु आज्ञा न भवति तेषां नृपसेवनेन किम् ? । अन्यच्च कीर्तिः न भवति तदा किम् ? । सज्जनानां पालनं न भवति । सज्जनाः पालयितुं न शक्यन्ते इत्यर्थः । दानं दातुं न शक्यते । अपि तु भोगोऽपि न, पञ्चेन्द्रियसौख्यं न । च अन्यत्, मित्रसंरक्षणं न मित्राणां रक्षितुं न शक्यते । तदा नृपसेवनया किम् ? । एते षड् गुणाः नृपसेवनतो भवन्ति ॥ ८८ ॥

अथ जडशिष्या(क्षा)माह—

स्वायत्तमेकान्तहितं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥ ८९ ॥

विधात्रा वेधसा । कोऽर्थः[1] । अज्ञतायाः मूर्खतायाः, छादनं विनिर्मितं गोपनकं कथितम् । किं० छादनम्[2] । स्वायत्तं आत्मायत्तम् । एकान्तहितं सर्वथापि हितकारि । किं तत् छादनम् ? । सर्वविदां समाजे विद्वत्सभायां विशेषतोऽपण्डितानां मूर्खाणां विभूषणं मौनमेव तूष्णींकतैव ॥ ८९ ॥

अथ नीचसंगतेः फलमाह—

उद्भासिताखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः ।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः ॥ ९० ॥

---

१ घ. भूषणयम् । २ घ. °नेः ।

कैः पुरुषैः अस्य नीचस्य गोचरगतैः सुखमास्यते उपविश्यते ? । अपि तु न कैरपि । कि० नीचस्य ? । उद्भासिताखिलखलस्य । उद्भासिताः उदयं प्रापिता अखिलाः समस्ताः खलाः दुर्जना येन सः, तस्य उद्भासिताखिलखलस्य उदयं प्रापितसमस्तनीचजनस्य । पुनः कि० नीचस्य ? । विशृङ्खलस्य अष्टस्य शिथिलस्य । पुनः किं० नीचजनस्य ? । प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः । प्राग्जाता पूर्वं निर्मिता चान्यत् विस्मृता निजा आत्मीया अधमकर्मवृत्तिर्येन स प्राग्जातविस्मृतनिजाधमकर्मवृत्तिः, तस्य पूर्वकृतविसारितनिजाधमकर्मणः । पुनः किं० ? । दैवादवाप्तविभवस्य । दैवात् दैवयोगात् अवाप्तः प्राप्तो विभवो धनं येन स दैवादवाप्तविभवः, तस्य । पुनरपि किं० नीचस्य ? । गुणद्विषः गुणानां द्वेषो यस्य असौ गुणद्विट्, तस्य गुणद्विषः । अतः कारणात् नीचानां संगतौ सुखं न भवति ॥ ९० ॥

अथ विद्याप्रौढिमा ( मां ) प्राह—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो[1] विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते[2] न हि धनं विद्याविहीनः पशुः ॥ ९१ ॥

नाम इति संबोधने । नरस्य पुंसः विद्या अधिकं रूपम् । यतः प्रोक्तं "विद्या रूपं कुरूपाणाम् ।" अन्यच्च, विद्या प्रच्छन्नं गुप्तं धनम् । च विद्या भोगकरी पश्चाद्भोगसंपादयित्री । पुनर्विद्या यशःसुखकरी । पुनर्विद्या गुरूणां गुरुः । विद्या विदेशगमने बन्धुजनः मित्रजनः । विद्या परं दैवतम् । विद्या राजसु पूज्यते राजमण्डलेषु अर्च्यते । न हि धनं पूज्यते । किं बहुनोक्तेन ? । विद्याविहीनः पशुः ॥ ९१ ॥

अथ शिष्या( क्षा )माह—

दाक्षिण्यं स्वजने दया परजने शाठ्यं जने दुर्जने
प्रीतिः साधुजने स्मयः खलजने विद्वज्जने चार्जवम् ।
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ ९२ ॥

च अन्यत् । ये पुरुषाः एवंविधा भवन्ति लोकस्थितिस्तेष्वेव, नापरेषु । किं० ते ? । कलासु कुशलाः निपुणाः । येषां पुरुषाणां स्वजने स्वकीयलोके दाक्षिण्यम् । येषां पुरुषाणां परजने परलोके दया । येषां दुर्जने जने शाठ्यं दुष्टाभिप्रायः । येषां साधुजने सुजनजने प्रीतिः स्नेहः । येषां पुंसां खलजने दुर्जनजने स्मयः कोपः । येषां पुंसां च अन्यत् विद्वज्जने आर्जवम् । येषां शत्रुजने वैरिवर्गे शौर्यम् । येषां पुरुषाणां गुरुजने क्षमा । येषां पुंसां नारीजने धूर्तता चातुर्यता । एभिर्गुणैर्गुरुतामारोहति जनः ॥ ९२ ॥

---

१ च- बन्धुजने । २ ग- पूजिता ।

पुनरपि शिष्या(क्षा)माह—

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयभुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयोर्
विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ९३ ॥

प्रकृतिमहतां स्वभावमहतां पुरुषाणां ऐश्वर्येण विनापि इदं वक्ष्यमाणं मण्डनम् । इदं किं किम् ? । करे श्लाघ्यस्त्यागः (ट. प्रशंसनीयं वितरणम्) । पुनः किम् ? । शिरसि मस्तके गुरुपादप्रणयिता (ट. नमनं) गुरुचरणनम्रता । पुनरपि किम् ? । मुखे सत्या वाणी । पुनरपि किम् ? । विजयभुजयोः जयकारिदोर्दण्डयोः अतुलं प्रबलं वीर्यं पराक्रमः (क. छ. प्राक्रमः) । पुनरपि किम् ? । हृदि स्वच्छा वृत्तिः स्वच्छप्रकृतिः । चान्यत् । श्रवणयोः श्रुतम् । चान्यत् । अधिगतं अधीतं महतां मण्डनमिदम् ॥ ९३ ॥

अथ महतां चरित्रविभूतिमाह—

वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्ये कष्टं सदा स च धार्यते ।
तमपि कुरुते क्रोडाधीनं पयोधिरनादराद्
अहह महतां निःसीमानश् चरित्रविभूतयः ॥ ९४ ॥

शेषः पन्नगाधीशः भुवनश्रेणीं चतुर्दशभुवनमालां फणाफलकस्थितां फणावलीसमारोपितां वहति धारयति । कमठपतिना कूर्माधिपतिना मध्ये पृष्ठोपरि सदा सर्वदा कष्टं कृच्छ्रेण यथा भवति स शेषो धार्यते। पयोधिः समुद्रः तमपि शेषनागाधिराजं अनादरात् लीलया क्रोडाधीनं कुरुते उत्सङ्गाधीनं विदधाति । अहहेति आश्चर्ये। महतां चरित्रविभूतयो निःसीमानो वर्तन्ते ॥ ९४ ॥

अथ विजयश्रीस्वरूपमाह—

स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् ।
विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ ९५ ॥

[विजयश्रीर्वीराणां] भुजयोर्बाह्वोरन्तरं अन्तरालं स्पृहयति वाञ्छति । [केव ? । प्रौढवनितेव ।] या प्रौढवनिता भवति सा वीराणां भुजयोरन्तरं स्पृहयति । ननु कि० भुजयोरन्तरम् ? । आयतकरवालकररुहविदीर्णम् । आयतो विस्तीर्णो योऽसौ करवालः खड्ग इव ये

१ ग. श्लाघस्त्यागं । २ ग. घ. प्रणमनं, ग. मातृकायां चतेरनन्तरं द्वितीयतृतीयचरणभागौ व्यत्यस्तौ । ३ ग. घ. विजयि; ग. 'भुजयोः पौरुषमहो । ४ ग. श्रुतिमधिगते । ५ ज. भवन । ६ ग. घ. पृष्ठं । ७ ग. सदैव च; घ. तदेव हि । ८ ग. दीयते । ९ ग. च. छ. व्युत्पन्ना ।

करुहाः नखास्तैर्विदीर्णं आयतकरवालकररुहविदीर्णम् । यथा व्युत्पन्नप्रौढवनिता वीराणां भुजयोरन्तरालं वाञ्छति तथा विजयश्रीरपि वीराणां भुजयोरन्तरालं वाञ्छतीत्यागमः । पथ्याछन्दः ॥९५॥

सभाग्य-निर्भाग्यजातयोराधिक्यमाह—

परिवर्तिनि संसारे मृतः को[1] वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥ ९६ ॥

अस्मिन् संसारे को न मृतः पराशु(सु)तां को न प्राप्तः ? । वा अथवा को न जायते ? । अपि तु सकलोऽपि संसारः । [कथंभूते संसारे ? । परिवर्तिनि विनश्वरे ।] येन जातेन वंशः समुन्नतिं याति स एव जातः । अपरैर्बहुभिर्जातैः किमित्यर्थः ॥ ९६ ॥

अथ तेजस्विनां गुणानाह—

लज्जागुणौघजननीं जननीमिव[2] स्वाम्
अत्यन्तशुद्धहृदयामनुवर्तमानाः ।
तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ९७ ॥

तेजस्विनः पुरुषाः सुखं यथा भवति असूनपि प्राणानपि संत्यजन्ति । न पुनः प्रतिज्ञां संत्यजन्ति । किं० तेजस्विन. ? । सत्यव्रतव्यसनिनः । सत्यव्रतस्य व्यसनं विद्यते येषां ते सत्यव्रतव्यसनिन', सत्यवादिन इत्यर्थं । पुन किं० तेजस्विनः ? । स्वां प्रतिज्ञामनुवर्तमानाः । किं० प्रतिज्ञाम् ? । लज्जागुणौघजननीम् । लज्जा च गुणौघश्च लज्जागुणौघौ, तयोर्जनयित्री शीलमस्याः सा लज्जागुणौघजननी, ताम् । कि० प्रतिज्ञाम् ? । अत्यन्तशुद्धहृदयाम् । अत्यन्तं शुद्धं हृदयं यस्याः सा अत्यन्तशुद्धहृदया, ता अतिनिर्मलहृद्यामित्यर्थः । प्रतिज्ञा कामिव ? । स्वां जननीमिव । यथा तेजस्विनः असूनपि परित्यजन्ति न पुन. स्वां जननीं परित्यजन्ति । किं० जननीम् ? । लज्जागुणौघजननीम् । पुनः कि० जननीम् ? । अत्यन्तशुद्धहृदयाम् । तेजस्विनः किंकुर्वाणाः ? । स्वां जननीमनुवर्तमानाः । पुनः किं० तेजस्विनः ? । सत्यव्रतव्यसनिनः ॥ ९७ ॥

अथ सत्त्वमहिमानमाह—

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ९८ ॥

सत्त्ववतामियं प्रकृतिः । खलु निश्चितम् । तेजसो हेतुः न वयः । वर्यातिक्रमः (ह. वरिपा०) । कथम् ? । शिशुरपि सिंहः गजेषु गजेन्द्रेषु निपतति सम्मुखं गत्वा गजकुम्भस्थलमनु निपतति (ट. अनुपतति) । कि० गजेषु ? । मदमलिनकपोलभित्तिषु । मदमलिनाः

१ ग. कोपि । २ ग. इवार्याम् । ३ ग. परिवर्त° ।

कपोलभित्तयो गण्डपाल्यो येषां ते मदमलिनकपोलभित्तयः, तेषु । एतावता शिशुरपि सिंहो गजेन्द्राणां निर्वहणं कुरुते । तदा सत्त्वमेव प्रधानम्, न वयः प्रधानम् ॥ ९८ ॥

अथ प्रतिपन्ननिर्वाहस्वरूपमाह—

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येव यः
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यो निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन् मनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुनि सतामेतद्धि गोत्रव्रतम् ॥ ९९ ॥

हि निश्चितम् । सतां सत्पुरुषाणां एतद्गोत्रव्रतं वर्तते । कुलाचारो वर्तते । यत् प्रतिपन्ने वस्तुनि निर्वाहः । केन न्यायेन ? । किमित्याक्षेपे । कूर्मस्य पातालकच्छपस्य । वपुषि शरीरे भरव्यथा भारस्य दुःखं नास्ति । यत् क्ष्मां पृथ्वीं न क्षिपति न परित्यजति । वा अथवा । किं दिनपतेः सूर्यस्य परिश्रमो नास्ति ?, यो निश्चलो न आस्ते । किं च श्लाघ्यो जनः अङ्गीकृतं उत्सृजन् सन् [ मनसा ] मानसे न लज्जते ?, अपि तु लज्जत एव । अतः कारणाद् महतां व्रतं प्रतिपन्ननिर्वाह एव ॥ ९९ ॥

अथ मन्त्रिणो मन्त्रस्वरूपमाह—

दूरादर्थं घटयति नवं दूरतश्चापशब्दं
कृत्वा भूयो भवति निरतः सत्सभापादनेषु ।
मन्दं मन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ १०० ॥

मन्त्री कामं अत्यर्थं सदा सर्वदा खेदभारैरमुक्तो भवति । कथं० मन्त्री ? । दूरात् परमण्डलाद् नवं नवीनमर्थं धनं घटयति संपादयति । च अन्यत् । दूरतः अपशब्दं अन्यायं घटयति संपादयति । कार्यं कृत्वा । सत्सभा पण्डितसभा । [ तस्या ] आपादनेषु व्यापारणेषु निरतो भवति । पुनर्मन्त्री मन्दं मन्दं शनैः शनैः पदं रचयति स्थानं करोति । कया ? । लोकचित्तानुवृत्त्या । लोकानां चित्तानि लोकचित्तानि, लोकचित्तानां अनुवृत्त्या लोकचित्तानुवृत्त्या जनचित्तावर्जनेनेत्यर्थः । मन्त्री क इव ? । कविरिव । यथा कविः खेदभारैश्चिन्ताभारैरमुक्तो भवति । कविः किं कुरुते ? । दूरात् आत्मशक्तेः नवं अर्थं शास्त्रार्थं घटयति । चान्यत् दूरतोऽपशब्दं घटयति । शास्त्राणि कृत्वा भूयः पुनरपि सत्सभापादनेषु विस्तारणेषु निरतो भवति सावधानः स्यात् । च अन्यत् । मन्दं मन्दं पदं रचयति योजयते । कया ? । लोकचित्तानुवृत्त्या । विद्वल्लोकानां मनोरक्षणेन, मा विद्वांसोऽपशब्दं निष्कासयन्तु । अत एव कवि-मन्त्रिणौ सर्वदापि चिन्ताक्रान्तौ स्तः ॥ १०० ॥

---

१ क. तु मनसा इत्यपि; ग. सुमनसा । २ घ. त्यक्त्वा ।

अथ प्राप्तेः स्वरूपमाह—

दैवेन प्रभुणा स्वयं जगति यद् यस्य प्रमाणीकृतं
तत् तस्योपनयेन् मनागपि महान्[1] नैवाश्रयः कारणम् ।
सर्वाशापरिपूरके[2] जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥१०१॥

**दैवेन जगति** पृथिव्यां स्वयं यत् यस्य **प्रमाणीकृतं** प्रमाणोपेतं कृतमित्यर्थः । **मनागपि** स्तोकमपि । **तत् तस्योपनयेत्** ढौकयेत्, प्राप्नोतीत्यर्थः । **मदाद्** गर्वात् । **आश्रयः** कस्याप्याधारः **कारणं नैव** । अमुमेवार्थं कविर्दृष्टान्तेन द्रढयति—**जलधरे** मेघे **प्रत्यहं वर्षत्यपि** परं **चातकमुखे सूक्ष्मा एव पयोबिन्दवः पतन्ति** । किं० बिन्दवः ? । **द्वित्राः** । द्वौ वा त्रयो वा प्रमाणं येषां ते द्वित्राः । एतावता यस्य यद् भाग्यलभ्यं तदेव भवति ॥ १०१ ॥

अथ संग्राममृतस्य फलमाह—

अभिमुखनिहतस्य सतस्तिष्ठतु तावज् जयोऽथवा स्वर्गः ।
उभयबलसाधुवादः श्रवणसुखोऽसौ बलात्यर्थम्[3] ॥ १०२ ॥

**सतः** सत्पुरुषस्य वा शूरस्य तावज्जयः **अथवा स्वर्गं** तिष्ठतु । **असौ श्रवणसुखः** अत्यर्थं बलातिबलं बध्नाति । किं० श्रवणसुखः ? । **उभयबलसाधुवादः** । उभयबले उभयसैन्ये साधुवादो यस्य स उभयबलसाधुवादः । किं० सतः ? । **शूरस्य अभिमुखनिहतस्य** संग्रामसंमुखमारितस्य ॥ १०२ ॥

वचनकलाधिक्यमाह—

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः ।
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १०३ ॥

**पुरुषं केयूरा** बाहुरक्षका न **विभूषयन्ति** । पुरुषं **हारा न** विभूषयन्ति । किं० हाराः ? । **चन्द्रोज्ज्वलाः** चन्द्रवन्निर्मलाः । पुरुषं स्नानं न विभूषयति । **विलेपनं न** विभूषयति । **कुसुमं न** विभूषयति । **अलंकृता मूर्धजाः** केशा न विभूषयन्ति । **एका** वाणी पुरुषं **समलंकरोति** । **या** वाणी **संस्कृता** संस्कृतवक्रा पुरुषेण **धार्यते** । **खलु** निश्चितम् । **भूषणानि क्षीयन्ते** क्षयं यान्ति । परं प्राणिना **वाग्भूषणं भूषणम्** [ न क्षीयते ] । एतावता एकेन वचनकला विलोक्यते ॥ १०३ ॥

---

१ ध. महान् । २ घ. परिपूजके । ३ क. बलात्यर्थे; छ. बलात्यत्यर्थम् ।

अथ स्वजनचेष्टितमाह अन्योक्त्या–

यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् ।
अवकरनिकरं विकिरति तत् किं कृकवाकुरिव हंसः ॥ १०४ ॥

नाम इति संबोधने । यदि चेत् कदाचिदपि दैवगत्या जगत् असरोजं जातं नि कमलं जातम्, तत् किं हंसो राजहंसः अवकरनिकरं कचवरपुञ्जं विक(कि)रति विवरण (क. छ. चरणविक्षेप) करोति[1] । अपि तु न । हंस क इव[2] । कृकवाकुरिव कुर्कुट इव । यथा कृकवाकुरवकरनिकरं विकरति तथा राजहंसो न ॥ १०४ ॥

श्रीसिद्धसूरिगुरुसंनिहितप्रतापात्
छन्दत् कवित्वमतिमाप्य विचारदृष्ट्या ।
रम्येह भर्तृहरकाव्यवरस्य टीका
श्रीपाठकेन विदधे धनसारनाम्ना ॥ १ ॥

॥ इति प्रथमशतकस्य नीतस्य टीकेयं [ समाप्ता ] ॥



१ ग. संजातं । २ घ. विनाऽन्यत्र विकरति ।

# अथ द्वितीयं शृङ्गारशतकम् ।

अथ हरचरणसरणप्रथमकाव्यमाह—

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्करो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्छेदयंश्[2]
चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ १ ॥

**हरो** महेशः योगिनामन्तर्गततत्त्वविचारा( क. °रि )णां चेतःसद्मनि मानसमन्दिरे विजयते सर्वोत्कर्षेण वर्तते । किं० हरः ? । **ज्ञानप्रदीपः** । ज्ञानस्य प्रदीपः ज्ञानप्रदीपः । जगदुद्द्योतकत्वात् । किं० ज्ञानप्रदीपः ? । **चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्करः** । चूडावत् मुकुटवदुत्तंसिता ( क. छ. चोर्ध्वीकृता ) चार्वी ( क. छ. चारु ) मनोज्ञा चन्द्रकलिका तस्याः, चञ्चच्छिखाया भासं दीप्तिं करोतीति चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्करः । अन्योऽपि प्रदीपः चञ्च( हं.° पंच° )च्छिखाभास्करो भवति । अत्रापि चारुचन्द्रकलिकाचञ्चच्छिखाभास्करो वर्तते—कान्तिकरो वर्तते । पुनः कथंभूतः ज्ञानप्रदीपो हरः ? । **लीलादग्धविलोलकामशलभः** । लीलया दग्धो विलोलश्चञ्चलः कामशलभो येन स लीलादग्धविलोलकामशलभः । युक्तोऽयमर्थः—अन्योऽपि प्रदीपः शलभानां पतङ्गानां दहति । तथाऽयं ज्ञानप्रदीपो हरः कामशलभस्य दाहं कुरुते । पुनः किं० ज्ञानप्रदीपो हरः ? । **श्रेयोदशाग्रे स्फुरन्** । श्रेयांस्येव कल्याणान्येव दशाग्रं श्रेयोदशाग्रम् । तत्र स्फुरतीति श्रेयोदशाग्रे स्फुरन् । युक्तम् । अन्योऽपि दीपो दशाग्रे स्फुरति । ननु अयमपि हरः प्रदीपः श्रेयोदशाग्रे स्फुरतीति भावः । पुनः किं कुर्वन् ? । **अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्छेदयन्** । अन्तर्गतं स्फूर्जदुल्लसत् अपारं मोहतिमिरस्य प्राग्भारम्, उच्छेदयन् स्फेटयन् । अत एव ज्ञानप्रदीपो हरः कथ्यते ॥ १ ॥

अधुना शुभाशुभकर्मणोः फलमाह—

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमतिस्फीते[3] शुभे कर्मणि ।
विच्छिन्ने[4] नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति[5] भ्रस्यद् दिशो दृश्यताम् ॥ २ ॥

प्राणिना **शुभे कर्मणि इत्यनुभूयते** एवं फलमुपभुज्यते । किं० शुभे कर्मणि ? । **स्थिरमतिस्फीते** । स्थिरा चासौ मतिः स्थिरमतिः, स्थिरमतेर्नरस्य स्फीतं स्थिरमतिस्फीतं, तस्मिन् । इतीति किम् ? । **शुभ्रं सद्म** महद्धवलं गृहम् । अन्यच्च **सविभ्रमा युवतयः** हावभाव-

१ घ. °भास्वरो । २. ख. उद्भेदयन्; छ. अच्छेदयन् । ३ ग. स्थिरमिव; घ. स्फिरमिव ।
४. ग. छिन्नेऽस्मिन् । ५. ग. झटति-; ज. त्रुटिति ।

विभ्रमविलाससंयुक्ता नार्यः। अन्यच्च लक्ष्मीः प्राप्यते। किं० लक्ष्मीः? । श्वेतातपत्रोज्ज्वला। श्वेतातपत्रेण उज्ज्वला श्वेतातपत्रोज्ज्वला। नितरामतिशयेन शुभे कर्मणि विच्छिन्ने सति क्षयं याते सति। इत्यनुभूयते फलमिति प्राप्यते। सौख्यं मुक्ताजालमिव प्रसृतं सत् दिशो दृश्यतां (ह. ऽदृश्यतां) प्रयाति। (ट. दृशोऽदृश्यतां प्रयाति अथः पतनेत्रोऽदृश्यतां प्रयाति) किं० मुक्ताजालं मुक्ताहारम्? । अनङ्गकलहक्रीडात्रुटत्तन्तुकम्। [अनङ्गस्य कलहः अनङ्गकलहः] अनङ्गकलहस्य क्रीडा अनङ्गकलहक्रीडा, तया त्रुटत्तन्तुकं सूत्रं यस्य तत् अनङ्गकलहक्रीडात्रुटत्तन्तुकम्। साफल्यं कर्मात्र। ॥ २ ॥

अथ प्राणिनां विकारपदमाह—

तावदेव कृतिनामयं स्फुरत्येष निर्मलविवेकदीपकः।
यावदेव न कुरङ्गचक्षुषां ताड्यते चटुललोचनाञ्चलैः ॥ ३ ॥

अयं एष निर्मलविवेकदीपकः कृतिनां तावदेव स्फुरति जागर्ति। यावत् विवेकदीपकः कुरङ्गचक्षुषां नायिकानां चटुललोचनाञ्चलैर्न ताड्यते। [चटुलानि लोचनान्येव अञ्चला वस्त्रप्रान्ताः (क. छ. ॰प्रान्तः)] चटुललोचनाञ्चलाः, तैः। एतावता प्राणिनां तावदेव विवेको यावन्नायिकानां वशं ना(च. छ. न)याति इत्यर्थः (क. इति तात्पर्यम्; छ. नात्यर्थम्) ॥ ३ ॥

पुनस्तदेवाह—

धन्यास्त एव चपलायतलोचनानां
तारुण्यदर्पघनपीनपयोधराणाम्।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाऽऽकृतिं विकृतिमेति मनो न येषाम् ॥ ४ ॥

त एव धन्याः, येषां मनः चपलायतलोचनानां आकृतिं शरीरं दृष्ट्वा विकृतिं न एति न प्राप्नोति। चपलानि चायतानि कमलदलवद्विस्तीर्णानि लोचनानि यासां ताश्चपलायतलोचनाः, तासाम्। किं० चपलायतलोचनानाम्? । तारुण्यदर्पघनपीनपयोधराणाम्। तारुण्यदर्पेण घनौ निबिडौ पीनौ उन्नतौ पयोधरौ यासां ताः। तासां पुनः किं०? । क्षामोदरोपरिलसत्त्रिवलीलतानाम्। क्षामं यदुदरं क्षामोदरं, क्षामोदरस्योपरि लसत्त्रिवलीलता यासां ताः क्षामोदरोपरिलसत्त्रिवलीलताः, तासाम्। या क्षामोदरे पीरलसत्त्रिवलीलताः [इति] पाठः, तत्र क्षामोदरे कृशोदरे ॥ ४ ॥

अथ योगिनः पुरुषस्य स्वरूपमाह—

सदा योगाभ्यासे नवनववधूसंगमरसैर्
अविच्छिन्ना मैत्री स्फुरति कृतिनस् तस्य किमिमैः।

१. ग. ॰नां इति; घ. ॰नामपि। २. ज. चपल॰। ३. ज. आदर्शे चतुर्थपादः प्रथमपादानन्तरं दृश्यते। ४. ख. संगमनसोः. ५. ग. किमुतैः।

प्रियाणामालापैरधरमधुभिर्वक्त्रमधुरैः

सनिःश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥ ५ ॥

यस्य कृतिनः तत्त्वावबोधिन अविच्छिन्ना मैत्री सदा सर्वदा योगाभ्यासे स्फुरति । तस्य कृतिनः इमैः नवनववधूसंगमरसैः किम् ? । (छ. अपि तु किमपि न ।) च अन्वत् । प्रियाणामालापैः किम् ? । अधरमधुभिः किम् ? । कि० अधरमधुभि ? वक्त्रमधुरैः । पुन किं अधरमधुभिः ? । सनिःश्वा( ट.° श्वा )सामोदैः । पुनरपि कि० अधरमधुभि. ? । सकुचकलशाश्लेषसुरतैः ( ट. सहकुचकलशाश्लेषेण सुरत यत्र तैरित्यर्थ ) ॥ ५ ॥

अथ स्त्रीणामाधिक्यमाह कवि –

भवति वचसि सङ्गत्यागमुद्दिश्य वार्ता

श्रुतमुखरमुखानां केवलं पण्डितानाम् ।

जघनमरुणरत्नग्रन्थिकाञ्चीकलापं

कुवलयनयनानां को विहातुं समर्थः ॥ ६ ॥

कः पुमान् कुवलयनयनानां जघनं रमणप्रदेश विहातुं त्यक्तुं समर्थः ? । अपि तु न कोऽपि । किं० जघनम् ? । अरुणरत्नग्रन्थिकाञ्चीकलापं अरुणानि यानि रत्नानि अरुणरत्नानि माणिक्यानि, अरुणरत्नाना ग्रन्थि. अरुणरत्नग्रन्थि, अरुणरत्नग्रन्थिमयः काञ्चीकलापो यस्य सः अरुणरत्नग्रन्थिकाञ्चीकलाप, तम् । पण्डितानां वचसि केवलं सङ्गत्यागमुद्दिश्य वार्ता भवति । कि० पण्डितानाम् ? । श्रुतमुखरमुखानां श्रुतेन शास्त्रेण मुखराणि मुखानि येषां ते, तेषाम् ॥ ६ ॥

अथ कन्दर्पाधिक्यमाह–

मत्तेभकुम्भदलने भुवि सन्ति शूराः

केचित् प्रचण्डमृगराजवधेऽपि दक्षाः ।

किं तु ब्रवीमि बलिनां पुरतः प्रसह्य

कन्दर्पदर्पदलने विरला मनुष्याः ॥ ७ ॥

भुवि पृथिव्या मत्तेभकुम्भदलने शूराः सन्ति । केचित् पुरुषाः [ प्रचण्ड ] मृगराजवधेऽपि सिंहविदारणेऽपि दक्षाः सन्ति । तु पुन । किमपि बलिनां पुरतः [ प्रसह्य बलात्कारेण ] ब्रवीमि कथयामि । ते मनुष्याः विरला ये कन्दर्पदर्पदलने दक्षाः शूराः ते विरला अल्पा इत्यर्थ. ॥ ७ ॥

---

१. ग. घ °मधुरैः । २. ख. मधुभिः; घ. विधुभिः । ३. ग. घ

४. ग. च. °श्वासम् । ५. ह. क. च. सुराः । ६. ग. °विधेपि ।

अथ स्त्रीणां मोहाधिक्यमाह–

स्मितेन भावेन च लज्जया धिया पराङ्मुखैरर्धकटाक्षवीक्षितैः ।
वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः ॥८॥

स्त्रियो नार्यः । खलु निश्चितम् । समस्तभावैः सकलप्रकारैः बंधनं वर्तन्ते । कैः कैः प्रकारैः ? । स्मितेन हास्येन । च अन्यत् । भावेन चित्ताभिप्रायेण, लज्जया व्रीडया, धिया बुद्ध्या । पराङ्मुखैः विपरीतवदनैः अर्धकटाक्षवीक्षितैः । पुनः कैः ? । वचोभिः । पुनः केन ? । ईर्ष्याकलहेन । पुनः कया ? । लीलया । एतैः प्रकारैः स्त्रियः पुरुषाणां बन्धनमेव ॥ ८ ॥

अथ तासामेवाधिक्यमाह कविः–

एताश्चलद्वलयसंहतिमेखलोत्थ-
झंकारनूपुररवाहृतराजहंस्यः ।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशाक्षिपातैः ॥ ९ ॥

एताः तरुण्यः इमा युवत्यः कस्य मनो विवशं विह्वलं न कुर्वन्ति ? अपि त्वखिल-जगतः । कैः ? । वित्रस्तमुग्धहरिणीसदृशाक्षिपातैः । वित्रस्ता चासौ मुग्धा वित्रस्तमुग्धा, वित्रस्तमुग्धा या हरिणी तत्सदृशा ये अक्षिपाताः वित्रस्तमुग्धहरिणीसदृशाक्षिपाताः, तैः । चपलकटाक्षपातैरित्यर्थः । किं० तरुण्यः ? । चलद्वलयसंहतिमेखलोत्थझंकारनूपुररवा-हृतराजहंस्यः । चलन्तो ये वलयाः (क. ट. कङ्कणाः) चलद्वलयास्तेषां संहतिः श्रेणिः, चलद्वलयसंहतिश्च मेखलोत्थझंकाराश्च नूपुररवास्ते. । आ समन्तात् भावेन हृता राजहंसो याभिः, ताः चलद्वलयसंहतिमेखलोत्थझंकारनूपुररवाहृतराजहंस्यः । एतावता सलावण्यनारीणां रूपं दृष्ट्वा कस्य मनो विह्वलं न भवतीत्यागमः ॥ ९ ॥

अथ नारीभ्यः सुखदुःख[ स्वरूप ]माह कविः–

सत्यं जना वच्मि न पक्षपाताल्लोकेषु सप्तस्वपि तथ्यमेतत् ।
नान्यन्मनोहारि नितम्बिनीभ्यो दुःखैकहेतुर्नहि कश्चिदन्यः ॥ १० ॥

हे जनाः लोकाः ! सत्यं वच्मि अवितथं कथयामि । न पक्षपाताद् वच्मि । यत्तु सप्तस्वपि लोकेषु एतत्तथ्यं ( क. च. तथ्यं ) । नतु किम् ? । नितम्बिनीभ्यो युवतीभ्यो-ऽन्यन्मनोहारि किमपि न । अन्यत् [ अन्यः ] कश्चित् ( ख. ट. किंचित् ) नितम्बिनी-मन्तरेण दुःखैकहेतुर्नहि नास्त्येव ॥ १० ॥

---

१. ख. 'दीर्घा° । २. ख. 'भावे । ३. ख. ग. घ. °हंसाः; ज. °हंसः । ४. ख. चित्रस्त०; घ. चित्रस्य । ५. ङ. क. च. यत्सप्तस्वपि; ज. सर्वेषु च । ६. ख. घ. किंचिदन्यत् ।

तासामेव स्वरूपमाह कविः—

लीलावतीनां सहजा विलासास् त एव मूढस्य हृदि [1]स्फुरन्ति ।
रागो नलिन्या हि निसर्गसि[2]द्धैस् तत्र [3]भ्रमसेव मुधा षडङ्घ्रिः ॥ ११ ॥

लीलावतीनां ललनानां विलासाः सहजाः स्वभावजाता वर्तन्ते । परं मूढस्य हृदि त एव स्फुरन्ति । कोऽर्थः ? । मूढजनश्चेतसीदं विचिन्तयति—इयं प्रमदा मां दृष्ट्वा दृष्ट्वा हावभावविभ्रमविलासान् कुरुते । तन्मुधैव । यतः प्रोक्तं नाममालायाम् ( ख. ट. हेमाचार्यैः )।

"मोट्टायितं कुट्टमितं ललितं गर्हितं तथा ।
विभ्रमश्चेत्यलंकाराः स्त्रीणां स्वाभाविका दश ॥"

इति रहस्यम् । अमुमेवार्थं कविर्दृष्टान्तेन मूढजनमवबोधयति—नलिन्याः रक्तकमलिन्या रागो निसर्गसिद्धो वर्तते स्वभावोत्पन्नो वर्तते । षडङ्घ्रिर्भ्रमरः । तत्र कमलिन्यां मुधा ( छ. ट. मुधा ) भ्रमति ॥ ११ ॥

सिद्धाध्यासितकन्दरे [4]हरवृषस्कन्धावगाढद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने [5]स्थितिं स्थेयसि ।
कः कुर्वीत शिरःप्रणाममलिनं मानं मनस्वी जनो
यद्युत्त्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥ १२ ॥

यदि चेत् स्त्रियो न स्युः । यत्तदोर्नित्यसंबन्धः । इति न्यायात् । तदा को मनस्वी जनः स्वकीयं मानं शिरः प्रणाममलिनं कुर्वीत ? । अपि तु न कोऽपि । किं० स्त्रियः ? । उत्त्रस्तकुरङ्गशावनयनाः । उत्त्रस्तो योऽसौ कुरङ्गः तस्य शाववद् बालकवत् नयने यासां ता उत्त्रस्तकुरङ्गशावनयनाः । पुनः किं० स्त्रियः ? । स्मरास्त्रं कामास्त्रम् । आविष्टपुल्लिङ्गः ( ह्रं. क. छ. 'पुल्लिङ्गं' ) एवंविधा नार्यश् चेन्न स्युः तदा मानं कश्चिदपि नोज्झिष्यत ( नौज्झिष्यत् ) । क्व सति ? । हिमवतो हिमाचलस्य पर्वतस्य स्थाने स्थितिं ( छ. स्थितं ) स्थेयसि निश्चले सति । किं० हिमवतः स्थाने ? । गङ्गाधौतशिलातले गङ्गया भागीरथ्या धौतं प्रक्षालितं शिलातलं यस्य स० तस्मिन् । पुनः किं० हिमवतः स्थाने ? । हरवृषस्कन्धावगाढद्रुमे । हरस्येश्वरस्य वृषो बलीवर्दः हरवृषः ( ह्रं. च. हरिवृषः ), तस्य स्कन्धेन अवगाढा घर्षिता द्रुमा वृक्षा यत्र स हरवृ० तस्मिन् । [ पुनः किंभूते हिमवतः स्थाने ? सिद्धाध्यासितकन्दरे सिद्धैरध्यासिता कन्दरा यस्य स तस्मिन् । ] चेद्धिमवतो निरञ्जनानि शृङ्गाणि आत्मार्थसाधकानि वर्तन्ते, तदा परसेवां कः कुर्वीत ? । चेन्नार्यो न भवन्ति ॥ १२ ॥

मनस्विनां एकावस्थोपदेशमाह कविः—

दिशं [6] वनहरिणीभ्यो वंशकाण्डस्थलीनां
कवलमुपलकोटिच्छिन्नमूलं कुशानाम् ।

१. क. ज. स्फुरंति । २ च. °सिद्धिस् । ३. ग. भ्रमलेप । ४ ग. हरिवृष । ५. ख. घ. स्थिते । ६. ख. दिनवन ।

शुकयुवतिकपोलापाण्डु ताम्बूलवल्ली-
दलमरुणनखाग्रैः पाटितं वा वधूभ्यः ॥ १३ ॥

हे मनस्विन्! वधूभ्यः सुन्दरीभ्यः नागवल्लीदलं ताम्बूलनागवल्लीदलं (ट. ताम्बूलवल्लीदलं) वीटकं दिश वितर। वा अथवा वनहरिणीभ्यः वनमृगीभ्यः कुशानां दर्भाणां कवलं दिश देहि। कि० नागवल्लीदलम्? । अरुणनखाग्रैः पाटितं विदारितं विनशीकृतम्। पुनरपि किं विशिष्टं नागवल्लीदलम्? । शुकयुवतिकपोलापाण्डु। शुकयुवती शुकी [तस्याः] कपोलवत् आ समन्तात् भावेन पाण्डु गौरवर्णम्। "पुंवद्भाषितपुंस्कादनूङ् पूरण्यादिषु स्त्रियाम्।" तुल्याधिकरणे युवतीस्थाने युवति। कवलं कासाम्? वंशकाण्डस्थलीनां वंशानां काण्डस्थली वंशकाण्डस्थली, [तेषां] वंशपल्लवानां कवलमित्यर्थः। किं० कवलम्? । उपलकोटिच्छिन्नमूलम्। उपलः प्रस्तरस्तस्य कोटिः अग्रविभागः तया छिन्नं मूलं यस्य स उपलकोटिच्छिन्नमूलस्तम्, उप० ॥ १३ ॥

अथ विषयरसनिर्दोषाधिनयमाह—

असाराः सन्त्येते[1] विरतिविरसा[2] ये च विषया
जुगुप्सन्तां[3] यद्वा ननु सकल[4]दोषास्पदमिति[5]।
तथाप्यन्तस्तत्त्वप्रणिहितधियामप्यतिबले-
स्तदीयोऽनाख्येयः स्फुरति हृदये कोऽपि[7] महिमा ॥ १४ ॥

च अन्यत्। ये (क. के; ख. ट. एते) विषयास्ते पण्डितैः। यद्वा अथवा इति जुगुप्सन्तां तिरस्क्रियन्ताम्। इतीति किम्? । ननु निश्चितम्। विषयाः सकलदोषास्पदम्। पुनः इतीति किम्? । एते विषया विरतिविरसाः सन्तः असाराः सन्ति। तथापि एवं सत्यपि। अन्तस्तत्त्वप्रणिहितधियां अपि महात्मनामपि विदुषामपि। तदीयो महिमा तस्य विषयस्य महिमा। हृदये कोऽपि अपूर्व इव स्फुरति। कि० महिमा? । अनाख्येयः वक्तुमशक्यः। अन्तर्गतत्वेन प्रणिहिता सत्यीकृता स्थापिता धीर्बुद्धिर्यैस्ते अन्तस्तत्त्वप्रणिहितधियः, तेषामपि कामरसव्याप्तौ सत्यां तत्त्व तदेव आगर्ति। न तु शास्त्रादिको रस ॥ १४ ॥

अथ मनसो रुचिस्वरूपमाह कविः—

भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो
विचित्रालापानां वयमपि कवीनामनुचराः।
तथाप्येतद् ब्रूमो न हि परहितात् पुण्यमधिकं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ॥ १५ ॥

---

१ ग. सन्त्येते। २ ग. विरसायास। घ. विरसाश्चापि। ३. घ. जुगुप्सन्तं। ४. ग. शकल०। ५. ख. घ. °मपि। ६ ग. च. बलं तदी. ७. ग. कोप्यमहिमा।

हे पूज्याः ! भवन्तोऽत्र संसारे वेदान्ततत्त्वप्रणिहितधियां वेदरहस्यनिश्चलबुद्धीनां गुरवो वर्तन्ते । वयमपि कवीनामनुचरा वर्तामहे । किं० कवीनाम् ? । [ विचित्रालापानाम् । ] विचित्रो आलापो येषां ते विचित्रालापाः, तेषां वि० । तथापि एवं सत्यपि । किमपि वयमपि एतद् ब्रूमः । किम् ? । न हि परहितात् अधिकं पुण्यं नास्ति । अस्मिन् संसारे कुवलयदृशः नार्याः अपरं न च रम्यं न किमपि सुन्दरम् ॥ १५ ॥

अथ पृच्छां चिकीर्षुराह कविः—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ।
सेव्याः नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥१६॥

हे आर्याः हे पण्डिताः ! । इदं समर्यादं वाक्यं वदन्तु । भोः किं कृत्वा ? । मात्सर्यमुत्सार्य परिहृत्य । अपि च कार्यं विचार्य । तत् किम् ? । किमु भूधराणां पर्वतानां नितम्बाः उत स्मरस्मेरविलासिनीनां सुन्दरीणां नितम्बाः सेव्याः ? । तत्सत्यावहं मम पुरस्तान्निवेदयन्तु ( ख. ट. अस्मत्पुरस्तान्निवेदयन्तु ) ॥ १६ ॥

अथ मनसो रुचिः प्राह कविः—

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापैर्
द्वयमपि पुरुषाणां सर्वदा सेवनीयम् ।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ १७ ॥

हे तत्त्वार्थिनः ! इह अस्मिन्नर्थे बहुभिरुक्तैः किम् ? किंलक्षणैर्बहुभिरुक्तैः ? । वस्तुशून्यैर्युक्तिशून्यैः [ पुनः किंलक्षणैरुक्तैः ? । प्रलापैः अनर्थकवचोभिः ] । पुरुषाणां धर्मार्थकामयुक्तानां सर्वदा सर्वकालं द्वयमपि सेवनीयं द्वयोरपि परिशीलनं कर्तव्यम् । सुन्दरीणां रमणीनां यौवनं वा, वनं वा । किं० यौवनम् ? । अभिनवमदलीलालालसं अभिनवा मदलीला अभिनवमदलीला, ताभिर्लालसम् । पुनः किं० यौवनम् ? । स्तनभरपरिखिन्नं स्तनभरेण परिखिन्नं स्तनभरपरिखिन्नम् ॥ १७ ॥

अथ जितेन्द्रियस्वरूपमाह कविः—

बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्येते वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ १८ ॥

१. ग. अर्थं; ख. घ. युक्ति । २ ग. द्वयमिह । ३ ख. घ. उपरतं; च. अपि रतं

हे बाले ! अमी मन्थराः दृष्टिपाताः लीलामुकुलितं यथा भवति किं क्षिप्यन्ते किं प्रेर्यन्ते[1] । विरम विरम । एष ते तव श्रमः व्यर्थो मुधैव । संप्रति एते वयं जगज्जालं तृणमिव आलोकयामो विलोकयाम । कथम् ? । बाल्यं अपरतं विरमित (ख ट उपरत विरत)। आस्था वनान्ते । मोहः क्षीणः । अस्माकमीदृश स्वरूप वर्तते । सम्प्रति वयमीदृशा स्म ॥ १८ ॥

अथ कामिनः कामतत्त्वमाह–

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरतटे रतिखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यैः[2] क्षिपा[3] क्षिपयति[4] क्षणलब्धनिद्रः ॥ १९ ॥

धन्यः प्राणी एवंविधा क्षिपा रजनीं क्षिपयति निर्गमयति । किं कृत्वा ? । वक्षो हृदय पिधाय (च ट विधाय) आच्छाद्य । कथंभूत सन् ? । भुजपञ्जरमध्यवर्ती सन् । कि० धन्य ? । कान्तापयोधरतटे रति(ह रत०)खेदखिन्नः । कि० कान्तापयोधरतटे ? । मत्तेभकुम्भपरिणाहिनि । मत्तेभकुम्भवत् परिणाहो विस्तारो विद्यते यस्य स तस्मिन् । पुन किं० धन्य ? । क्षणलब्धनिद्रः क्षणमात्र लब्धा निद्रा येन स क्षणलब्धनिद्र ॥ १९ ॥

अथ कश्चित्पुमान् काचिन्नायिका प्रत्याह–

अनाघ्रात पुष्पं[5] किशलयमलूनं कररुहैर्
अनाविद्ध रत्न निधुवनमनास्वादितरसम्[6] ।
अखण्डं पुण्याना फलमिव भवद्रूपमनघ
न जाने भोक्तार क इह समुपस्थास्यत इति ॥ २० ॥

हे भद्रे ! अनघ भवद्रूपं प्रति अस्मत्यर्थे भोक्ता इति अमुना प्रकारेण क इह अस्मिन् रूपे समुपस्थास्यते । तदहं न जाने । कि० भवद्रूपम् ? । अनाघ्रातं पुष्पमिव कररुहैरलूनं नखाग्रैरत्रुटित किशलयमिव । उत्प्रेक्षते– अनाविद्धं अनुत्कीलित (ह ०रित) रत्नमिव । अनास्वादितरस (ह निधुवनमिव असुक्त सुरतमिव शुद्धपाठ ) निधुवनमिव हारहूरमिव । पुन किं० भवद्रूपम् ? । पुण्यानामखण्ड अक्षत फलमिव । एतावता नाहं जाने तव पतिं क विधास्यति भगवान् ॥ २० ॥

अथ दुर्भगसेवकमाश्रित्य कान्तास्वरूपमाह–

राजंस्तृष्णाम्बुराशेर्नहि जगति गतः कश्चिदेवावसानं
को वाप्यर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागः ।

---

१ क घ छ ज °मार्द्रे । २ ङ धन्या । ३ क घ क्षपा । ४ ग घ क्षपयति ।
५ ङ पुष्पं । ६ ख मधुघनम° ।

गच्छामः सद्म यावद् विकसितकुमुदेन्दीवरालोकिनीनाम्[1] ।
आक्रम्याऽऽक्रम्य रूपं झटिति न जरया लुञ्च्यते[2] प्रेयसीनाम् ॥ २१ ॥

हे राजन् !, तृष्णाम्बुराशेः तृष्णासमुद्रस्य कश्चिदवसानं प्रान्तं [जगति] गतः ? । अपि तु न । वा अथवा, यौवने स्ववपुषि गलिते सति प्रभूतैरप्यर्थैः प्रचुरैरपि धनैः कः सानुरागो भवति ? । अपि तु न कोऽपि । हे राजन् ! सं सद्म गच्छामः यावत् प्रेयसीनां वल्लभानां रूपं झटिति शीघ्रं जरया आक्रम्याक्रम्य न लुञ्च्यते न लुप्यते । किं० प्रेयसीनाम् ? । विकसितकुमुदेन्दीवरालोकिनीनाम् । विकसिते कुमुदेन्दीवरे विकसितकुमुदेन्दीवरे, तयोर्यदालोको यासां ता विकसितकुमुदेन्दीवरालोकिन्यः, तासाम् । विकसितकमलदलनयनानामित्यर्थः ॥ २१ ॥

अथ वर्षासमये पथिकस्वरूपमाह—

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः ।
क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयतु[3] ॥ २२ ॥

पथिकः दृष्टिं क्व पातयतु ? । कथम् ? । उपरि आकाशे घनं निबिडं घनपटलम् । तिर्यग् गिरयोऽपि नर्तितमयूराः नर्तिता मयूरा यस्मिंस्ते (छ. येषु ते) नर्तितमयूराः । इयं क्षितिरपि कन्दलधवला कन्दलैः कन्दैः धवलाः कन्दलधवलाः प्रसरितकन्दा इत्यर्थः । एवंविधं स्वरूपं दृष्ट्वा पथिकस्य हृदयं समुल्ललास । कया ? । स्वगृहयानोत्कण्ठया ॥ २२ ॥

अथ पुनरपि मनस्विनां स्वरूपमाह—

संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां
तत्त्वज्ञानामृताम्भःप्लुतलुलितधियां यातु कालः कदाचित् ।
नो चेन्मुग्धाङ्गनानां स्तनजघनघनाभोगसंभोगिनीनां
स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानाम्[4] ॥ २३ ॥

अस्मिन्नसारे संसारे पण्डितानां विदुषां द्वे गती । किं० संसारे ? । परिणतितरले परिणामचञ्चले । द्वे के गती पण्डितानाम् ? । कदाचित् तत्त्वज्ञानामृताम्भःप्लुतलुलितधियां कालो यातु । तत्त्वस्य ज्ञानं तत्त्वज्ञानं शुक्र (क. छ. शुभ; ट. मुक्त) ध्यानमित्यर्थः । तत्त्वज्ञानमेव अमृताम्भः तत्त्वज्ञानामृताम्भः, तेन प्लुता भिन्ना लुलिता च धीर्बुद्धिर्येषाम्, ते तत्त्वज्ञानामृताम्भःप्लुतलुलितधियः, तेषाम् । नो चेद् एवं न । मुग्धाङ्गनानां मनोहारिणीनां स्त्रीणाम् । स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानां कालो यातु । कोऽर्थः ? । स्थूला या उपस्थस्थली नितम्बस्थली स्थूलोपस्थस्थली, तासु स्थगितो योऽसौ करतलः स्थगितकरतलः, तस्य स्थगितकरतलस्य, सस्पर्शो योऽसौ लोलो लौल्य निआपः, तत्रोद्यताः, स्थगितकरतलस्पर्शलोलोद्यताः,

१ ग. आलोकनीनाम् । २ ख. घ. लुण्ठ्यते । ३ क. छ. पातयति । ४ क. छ. °लुल° ।

तेषाम् । किं० मुग्धाङ्गनानाम् ? । स्तनजघनघनाभोगसंभोगिनीनाम् । स्तनश्च जघनश्च स्तनजघनौ, स्तनजघनयोः घनः प्रचुरो आभोगो विस्तारः स्तनजघनघनाभोगः तस्य सम्यग् भोगो विद्यते यासां ताः स्तनजघनघनाभोगसंभोगिन्यः, तासाम् ॥ २३ ॥

अथ मोहस्य दुश्चेष्टितमाह—

कान्तेऽत्युत्पललोचनेऽतिविपुलश्रोणीभरेऽत्युन्नमत्-
पीनोत्तुङ्गपयोधरेऽतिसुमुखाम्भोजेऽतिसुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि
प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥ २४ ॥

**विद्वानपि** पुमान् **स्त्रियं** इति अमुना प्रकारेण **दृष्ट्वा माद्यति मोदते अभिरमते प्रस्तौति । अहो मोहस्य दुश्चेष्टितं** दुर्विलसितम् । तत्र माद्यति—मदी हर्षे । मोदते—मुद संमोदने । अभिरमते—रम (ट. रमु) क्रीडायाम् । प्रस्तौति—'ष्टुञ् स्तुतौ'। 'ष्टु धात्वादेः षः सः ष्टु'। निमित्ताभावेऽस्तु सर्वत्र वर्तमाने या निष्पत्ति. । इतीति किम् ? । हे कान्ते । 'कमु कान्तौ'। कमु काम्यते स्म । 'निष्ठा क्तः' तप्रत्ययः । 'पञ्चमोपधाया दीर्घः'। कान्ता इति निष्पन्नम् । मनोर० । स्त्रियामा० । तस्याः संबोधनं विधीयते । हे **कान्ते** । हे **अत्युत्पललोचने** । लोचनाभ्यामतिक्रान्तानि उत्पलानि यया सा अत्युत्पललोचना, तस्याः संबोधनं विधीयते हे अत्युत्पललोचने । हे **अतिविपुलश्रोणीभरे** । अतीव विपुल श्रोणीभरं यस्याः सा० । तस्याः संबोधनम् । हे अतिविपुल० । हे **अत्युन्नमत्पीनोत्तुङ्गपयोधरे** । अति उन्नमन्तौ पीनौ उच्च(°त्तु)ङ्गौ पयोधरौ यस्याः, सा०, तस्याः सबोधनम् । हे **अतिसुमुखाम्भोजे** अतिक्रान्तं सुमुखेन अम्भोजं कमलं यया सा०, तस्याः संबोधनम् । हे **अतिसुभ्रु** । अतीव सुष्टे [ °ष्ठु ] भ्रुवौ यस्याः सा०, तथा तस्याः सबोधनम् । एवंविधां वर्णना कृत्वा कृत्वा मोहमूढो जन. **स्त्रियं स्तौति** । कि० स्त्रियम् ? । **प्रत्यक्षाशुचिपुत्रिकाम्** । प्रत्यक्षं अशुचे पुत्रिका प्रत्यक्षाशुचिपुत्रिका, ताम् । **मोहस्य** विडम्बनेति ॥ २४ ॥

अथ रमणीनामङ्गोत्थगुणवर्णनमाह—

क्वचित्सुभ्रूभङ्गैः[1] क्वचिदपि च लज्जापरिगतैः
क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः ।
कुमारीणामेतैर्वदनसुभगैर्नेत्रवलितैः[2]
क्वचिल्लीलाब्जानां[3] प्रकरपरिकीर्णा इव दिशः ॥ २५ ॥

कुमारीणां सुन्दरीणाम् । एतैर्नेत्रवलितैः नेत्रविभ्रमै. दिशः लीलाब्जानां प्रकरपरिकीर्णा इव वर्तन्ते । कि० नेत्रवलितै. ? (°चलितै ) वदनसुभगैः । मुखलावण्येन शोभापरायणैः । किं०

१ ख. ग. सभ्रूभङ्गैः । २ ग. घ. चलितैः । ३ ख. घ. स्फुरल्लीला° ।

नेत्रवल्लितैः ?। क्वचित्सुभ्रूभङ्गैः सुष्ठो [ष्टु] भ्रूभङ्गो येषां ते सुभ्रूभङ्गास्तैः। पुनः किं० नेत्रवलितैः ?। क्वचिदपि च लज्जापरिगतैः। लज्जया परि समन्ताद्भावेन गता मिलिता लज्जा-परिगतास्तैः। पुनः किं० नेत्रवल्लितैः ?। क्वचिद्भीतित्रस्तैः भीत्या त्रस्ता भीतित्रस्तास्तैः। पुनः किं० नेत्रवल्लितैः ?। क्वचिदपि च लीलाविलसितैः। लील्या (क. च. लीलया) विलसितानि येषां तानि [तैः]। एवंविधैः चेष्टितैः कृत्वा दिशः कमलप्रकरपरिकीर्णा इव भान्ति॥ २५॥

युवतीनां स्वाभाविकमण्डनमाह—

वक्त्रं चन्द्रविडम्बि[1] पङ्कजपरीहासक्षमे लोचने
　वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः[2] कचानां चयः।
वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली
　वाचां हारिषु मार्दवं युवतिषु स्वाभाविकं मण्डनम्॥ २६॥

युवतिषु तरुणीषु इदं स्वाभाविकं मण्डनं वर्तते। इदं किम् ?। वक्त्रं चन्द्रविडम्बि चन्द्रानुकारि। लोचने पङ्कजपरीहासक्षमे कमलहास्यसमर्थे। पुन. किं० ?। वर्णः स्वर्ण-मपाकरिष्णुः निराकरिष्णुः। पुनः किं०। कचानां चयः अलिनी (नीं) जिष्णुः भ्रमरीवर्ण-जयनशीलम् (लः)। पुनः किम्। वक्षोजौ कुचौ इभकुम्भविभ्रमहरौ (ह. ज. करौ)। पुनः किम्? गुर्वी नितम्बस्थली। पुन' किम्? वाचां मार्दवं सौकुमार्यम्। किंलक्षणासु युवतिषु ?। हारिषु मनोहारिणीषु (ख. च. हारिषु) पुरन्ध्रीणां सहजमण्डनमिदम्॥ २६॥

नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम्।
सैवामृतमयी रक्ता विरक्ता विषवल्लरी[3]॥ २७॥

सुगमार्थोऽस्ति। परं तथापि नितम्बिन्या अमृतविषस्वरूपमाह कवि·—एकां नित-म्बिनीं मुक्त्वा किंचिन्नामृतं न विषम्। एतावता इयमेवामृतं इयमेव विषम्। सैव नित-म्बिनी रक्ता सती अमृतमयी विरक्ता सती विषवल्लरी विषवेलि· (ह. °वेलड्; ख °वेलड्; च °वेल्ड्;) इत्यर्थः॥ २७॥

एतमेवार्थमाह—

भ्रूचातुर्यात्कुञ्चिताक्षाः कटाक्षाः
　स्निग्धा वाचो लज्जितान्ताश्च[4] हासाः।
लीलामन्दं प्रस्थितं[5] च स्थितं च
　स्त्रीणामेतद् भूषणं चायुधं च॥२८॥

१ घ. विडम्ब। २ क. छ. अलिनीं। ३ ख. घ. लता। ४ ग. °तास्ते च। ५ ख. घ. सुस्थितं।

स्त्रीणां नारीणाम् । एतद्भूषणम् । च अन्यत् । आयुधमपि । एतत्किम् ? । कटाक्षाः । किं० कटाक्षाः ? । भ्रूचातुर्याकुञ्चिताक्षाः भ्रूचातुर्येण आकुञ्चितानि अक्षीणि याभिस्ता भ्रूचातुर्याकुञ्चिताक्षाः । पुन. किं० ? । स्निग्धा वाचः मधुराण्य । च अन्यत् । लज्जितान्ता हासाः । पुन किं० ? । प्रस्थितं गमनम् । च अन्यत् । स्थितम् । किं० प्रस्थितं च स्थित ? । लीलामन्दं लीलया मन्थरं ( क. छ. मन्थिरं, च. मन्दिर ) । स्त्रीणामेतानि भूषणानि । परमनोवेधनशस्त्रमपि ॥२८॥

तासा तारुण्यस्वरूपमाह—

स्मितं किंचिद्वक्त्रं सरलं[1]तरलो दृष्टिविभवः
परिस्पन्दो[2] वाचाम[3]भिनवविलासोक्तिसरसः ।
गतीनामारम्भः किशलयि[4]तलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव[5] न हि रम्यं मृगदृशः ॥ २९ ॥

तारुण्यं स्पृशन्त्या मृगदृशः । हि निश्चितम् । किमिव ( °ह ) रम्यं न ? । अपि तु रम्यमेव । रम्य किम् किम् ? । वक्रं किंचित् स्मितं हास्ययुक्तम् । दृष्टिविभवः सरलतरलः । वाचां धार्णाना परिस्पन्दो निर्गम ( ख. च ट निगम ) अभिनवविलासोक्तिसरसः । अभिनवविलासोक्त्या सरस अभिनवविलासोक्तिसरस । पुन किम् ? । गतीनामारम्भः किशलयितलीलापरिकरः अङ्कुरितलावण्यपरिवार । तारुण्यसमये पुरन्ध्रीणा कि किं न सुन्दरमित्यर्थ ॥ २९ ॥

अथ नायिकाना विकारमाह—

स्मृता भवति तापाय दृष्टा[6] तू[7]न्मादवर्धनी ।
स्पृष्टा[8] भवति मोहाय सा नाम दयिता कथम् ॥ ३० ॥

नाम इति संबोधने । सा दयिता कथमुच्यते ? । या स्मृता सती तापाय भवति । तु पुन. दृष्टा सती उन्मादवर्ध ( °र्धि ) नी भवति । या दयिता स्पृष्टा सती मोहाय भवति, तस्या. [ नाम ] दयिता कथ कथ्यते ? ॥ ३० ॥

अथ सामान्येन नियन [ ण्ण ] तामाह—

आवर्तः संशयानामविनयभवनं पत्तनं[10] साहसानां
दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
स्वर्गद्वारस्य विघ्नं नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं[11] विषममृतमयं[12] प्राणिलोकस्य पाशः[13] ॥ ३१ ॥

१ ग. °तरला दृष्टिविशिखा । २ ग. घ. परिस्फन्दो । ३ ग अभिमति° । ४ ख. घ. °लयति; च °लयत । ५ क. ग. छ किमिह । ६ ग. घ. च. दृष्ट्वा । ७ ख. ग. घ. ज. चोन्मादयायिनी । ८ घ. दृष्टा । ९. ग. °मुरनं । १० छ. पातनं । ११ घ. सृष्टं । १२ ग. °निर्मं प्राणिनां मोहपाश. । १३ घ पाशम् ।

'अहो! इदं स्त्रीयन्त्रं केन सृष्टम्?। किं० स्त्री०?। विषममृतमयम्। पुनः किं० स्त्रीयन्त्रम्?। प्राणिलोकस्य पाशः। पुनः किं० स्त्रीयन्त्रम्?। संशयानां संदेहानां आवर्तः। पुनः किं० स्त्रीयन्त्रम्?। अविनयभवनम्। पुनः किं० स्त्रीयन्त्रम्? साहसानां पत्तनम्। पुनः किं० स्त्रीयन्त्रम्?। दोषाणां संनिधानम्। पुनः किं० स्त्रीयन्त्रम्?। कपटशतमयम्। पुनः किं० स्त्रीयन्त्रम्?। अप्रत्ययानां अविश्वासानां क्षेत्रं भूमिः। पुनः किं० स्त्रीयन्त्रम्?। स्वर्गद्वारस्य विघ्नम्। पुनः किं० स्त्रीयन्त्रम्?। नरकपुरमुखं। पुनः किं० स्त्रीयन्त्रम्?। सर्वमायाकरण्डम्। इदं यन्त्रं प्राणिलोकस्य पाशकृते कृतमस्ति। बन्धनार्थम्॥ ३१॥

अथ नारीरूपतिरस्कारमाह—

नो सत्येन मृगाङ्क एष[1] वदनीभूतो न चेन्दीवर-[2]
द्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता।
किं त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वग्मांसास्थिमयं वपुर्मृगदृशां[3] मत्वा जनः सेवते॥ ३२॥

अहो कष्टं विलोक्यताम्। जनो मृगदृशां नारीणां वपुः शरीरं सेवते। किं० वपुः?। त्वग्मांसास्थिमयम्। त्वचां मांसानां अस्थ्नां च विकारोऽवयवो वा। एकस्वरादित्यं मयड्मय-प्रत्ययः। कथम्?। सत्येन एष मृगाङ्कश्चन्द्रो वदनीभूतः?। अपि तु न। च अन्यत्। इन्दीवरद्वन्द्वं कस्यापि लोचनतां गतम्?। अपि तु न। अपि पुनः अङ्गयष्टिः कस्यापि कनकैः कृता?। अपि तु न। किं० जनः?। किंत्वेवं पूर्वोक्तप्रकारेण कविभिः प्रतारितमनाः विप्रतारितचेताः। पुनः जनः किं कुर्वन्?। तत्त्वं विजानन्नपि अवगच्छन्नपि परं तथापि मानवो मुह्यते। अतत्त्वमपि तत्त्वं वेत्ति॥ ३२॥

अथ पुरुषाणां मोहनस्वरूपमाह—

सन्मार्गे तावदास्ते[4] प्रभवति हि नरस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव।
भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो[5] नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो[6] दृष्टिबाणाः पतन्ति॥ ३३॥

नरः सन्मार्गे तावदास्ते तावत्कालं तिष्ठति। हि निश्चितम्। नरो मनुष्यः तावदेव तावत्कालमेव इन्द्रियाणां प्रभवति जयं कुरुते पराभवति वा। नरः प्राणी लज्जां तावद्विधत्ते तावन्तं कालं लज्जां करोति। प्राणी विनयमपि तावदेव समालम्बते बिभर्ति। यावल्लीला-

१ ख. ग. घ. एव। २ ख. चेन्दीवरं। ३ क. च. छ. °दृशामन्धो; ग. °दृशां मन्दो। ४ ज. सदाल°। ५ ख. घ. पथगता। ६ क. °मुषाः; ख. °मुखाः; ग. ज. °मुषो; घ. ट. °मुखा; छ. °मुखः।

यतीनां सत्त्वानां एते दृष्टिबाणा न पतन्ति । किं० दृष्टिबाणाः ? । हृदि धृतिमुषः । पुनः किं० दृष्टिबाणाः ? । नीलपक्ष्माणः । अन्येऽपि बाणा नीलपक्ष्माणो भवन्ति ननु । एतेऽपि तथैव । पुनरपि किं० दृष्टिबाणाः ? । श्रवणपथजुषः । श्रवणयोः पन्थानं जुषन्तीति श्रवणपथजुषः । कर्णप्रान्तनेत्रे इत्यर्थः । पुनः किं० दृष्टिबाणाः ? । भ्रूचापाकृष्टमुक्ताः । भ्रूचापेन आकर्णान्तं आकृष्टमुक्ताः भ्रूचापाकृष्टमुक्ताः । तावदेव प्राणी यावद्युवतीनां नयनकटाक्षबाणा न प्रस्फुरन्ति । स एव शूरो यस्य ते न लगन्ति ॥ ३३ ॥

अथ वैराग्यतत्त्वमाह—

यदेतत् पूर्णेन्दुद्युतिहरमुदाराकृतिधरं
मुखाब्जं तन्वङ्ग्याः किल वसति यत्राधरमधुः ।
इदं तत् किंपाकद्रुमफलमिवातीव विरसं
व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ॥ ३४ ॥

तत् इदं वक्ष्यमाणं अस्मिन् यौवने काले व्यतीते व्यतिक्रान्ते सति विषमिव असुखदं भविष्यति । यदेतत्तन्वङ्ग्याः कृशोदर्या इदं मुखाब्जं पूर्णेन्दुद्युतिहरम् । किं० मुखाब्जम् ? । उदाराकृतिधरम् । किल इत्यलीके । यत्र मुखाब्जे अधरमधु वसति । तत् किंपाकद्रुमफलं विषवृक्षफलमिव परिणामे अतीव विरसं कालातिक्रमेण अतीव दुःखदं भवति ॥ ३४ ॥

अथ विषादवाक्यमाह—

संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवाकलङ्क-
व्यासङ्गव्यस्तधैर्यं कथममलधियो मानसं वा विदध्युः ।
यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः ॥ ३५ ॥

यदि चेत् अस्मिन् असारे संसारे अम्भोजनेत्राः कमलाक्ष्यो न स्युः । 'यत्तदोर्नित्यसंबन्धः' इति न्यायात् । तदा अमलधियो निर्मलबुद्धयो मानसं चित्तं व्यासङ्गव्यस्तधैर्यं संगतिनिराकृतसाहसं कथं वा विदध्युः कुर्युः । [ किंभूते संसारे ? । कुनृपतिभवनद्वारसेवाकलङ्के कुनृपतिभवनद्वारसेवाया कलङ्को यस्मिन् तस्मिन् । ] किं० अम्भोजनेत्राः ? । प्रोद्यदिन्दुद्युतिनिचयभृतः । प्रोद्य [न्] योऽसौ इन्दुः चन्द्रः तस्य द्युति [ निचयं कान्तिसमूहं बिभर्तीति [ बिभर्तीति ] इन्दुद्युति ] निचयभृतः । पुनः किं० अम्भोजनेत्राः ? । प्रेङ्खत्काञ्चीकलापाः । शब्दङ्करि( सः शब्दकृत्करि ) मेखला । पुनरपि किं० अम्भोजनेत्राः ? । स्तनभरविनमन्मध्यभागाः । स्तनभरेण विनमन् मध्यभागो यासां ताः स्तनम० । पुनः किं० अम्भोजनेत्राः ? । तरुण्यः युवत्यः ॥ ३५ ॥

१ ग. तरलशाः । २ ग. ज. मधु । ३ ग. इदानीमतिरसं । ४ घ. ॰ष्यति सुखदम् । ५ ख. घ. कलङ्कं; ज. कलंको । ६ ख. घ. व्यस्त ।

अथ नासामुक्ताफलकवर्णनमाह—

सुधामयोऽपि क्षयरोगशान्त्यै नासाग्र[1]मुक्ताफलकच्छलेन ।

अनङ्गसंजीवनदृष्टिशक्तिः मुखामृतं ते पिबतीति चन्द्रः ॥ ३६ ॥

हे नायिके! । चन्द्रः ते तव मुखामृतमिति पिबति । केन ? । नासाग्रमुक्ताफलकच्छलेन नासाया अग्रं नासाग्रं, नासाग्रस्य मुक्ताफलं नासाग्रमुक्ताफलम् । स्वार्थे कः । नासाग्रमुक्ताफलकं । तस्य छलं नासाग्रमुक्ताफलकच्छलम् । तेन नासा० । [ किमर्थं पिबति ? । क्षयरोगशान्त्यै क्षयरोगोपशमनाय । किं० चन्द्रः ? । अनङ्गसंजीवनदृष्टिशक्तिः अनङ्गस्य संजीवनं अनङ्गसंजीवनं, अनङ्गसंजीवनस्य दृष्टेः ] शक्तिर्यस्य सः स० ॥ ३६ ॥

परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो

मधुपतिर[2]तोत्कण्ठाभाजः प्रिया पिकभाषिणी ।

विरलसुरतस्वेदोद्गारा वधूवदनेन्दवः

प्रसरति धनाढ्यानां ग्रीष्मे कुतोऽपि गुणोदयः ॥ ३७ ॥

वधूवदनेन्दवः गुणोदयः ग्रीष्मे ग्रीष्मकाले कुतोऽपि [ धनाढ्यानां ] धन्यानां प्रसरति । कोऽसौ गुणोदयः ? । परिमलभृतो वाताः गन्धवाहाः पवनाः । शाखाः नवाङ्कुरकोटयः । पुनः कोऽयं गुणोदयः ? । विरलसुरतस्वेदोद्गाराः । किं० सुरतस्वेदोद्गाराः ? । मधुपतिरतोत्कण्ठाभाजः । पुनरपि कोऽयं गुणोदयः ? । प्रिया पिकभाषिणी । एवंविधो गुणोदयः धन्यानां गृहे भवति ॥ ३७ ॥

अथ कामवर्धनगुणानाह—

अच्छाच्छ[3]चन्दनरसार्द्र[4]करा मृगाक्ष्या[5]

धारागृहाणि कुसुमानि च कौमुदी च ।

मन्दो मरुत् सुमनसः शुचि हर्म्यपृष्ठं[6]

ग्रीष्मे मदं च मदनं च विवर्धयन्ति ॥ ३८ ॥

एते प्रकाराः ग्रीष्मे सप्तौ मदं चान्यत् मदनं विवर्धयन्ति । के के प्रकाराः ? । मृगाक्ष्याः (°क्षी; °क्ष्यो) अच्छाच्छचन्दनरसार्द्रकराः (°रा) । अच्छश्च अच्छश्च अच्छाच्छः । अच्छाच्छेन चन्दनरसेन आर्द्रौ करौ यस्याः सा अच्छाच्छचन्दनरसार्द्रकरा: [ °रा ] । पुनः के के ? । धारागृहाणि च अन्यत् कुसुमानि । च अन्यत् कौमुदी च अन्यत् सुमनसः । कुसुमस्य मन्दो मरुत् । अन्यत् शुचि हर्म्यपृष्ठम् । एते प्रकारा मदनवर्धना इत्यर्थः ॥ ३८ ॥

---

१ सर्वा मातृकाः 'नासाग्र' इति पठन्ति । २ ख. मधुपतिविरुतो°; ग. मधुरविरुतो°; घ. मधुपतिविरुतो° च. मधुपरिरुतो° । ३ ज. आच्छाद्य । ४ ई. रसार्धं° । ५ क. मृगाक्षीं इत्यपि; ख. ग. घ. मृगाक्षा; छ. मृगाक्षी; ई. मृगाक्ष्यो । ६ घ. °पृष्ठे ।

शास्त्रज्ञोऽपि प्रगुणितनयोऽध्यात्मबोधोऽपि बाढं
संसारेऽस्मिन् भवति विरलो भाजनं सद्गतीनाम् ।
येनैतस्मिन् निरयनगरद्वारमुद्घाटयन्ती
वामाक्षीणा भवति कुटिला भ्रूलता कुञ्चिकेव ॥ ३९ ॥

अस्मिन् संसारे विरलो जन सद्गतीना भाजनं भवति । कि० जन ? । शास्त्रज्ञोऽपि प्रगुणितनयोऽपि प्रगुणित प्रगुणीकृतो नयो येन स । बाढमात्मबोधोऽपि । आत्मान बोधयतीत्यात्मबोध । एव सत्यपि सद्गतिभाग् भाग्यवानेव नापर । तत्कथम् ? । येन कारणेन वामाक्षीणा वामनयनाना कुटिला भ्रूलता भवति । कि० भ्रूलता ? । उत्प्रेक्ष्यते—कुञ्चिका इव । कुञ्चिका कि कुर्वती ? । निरयनगरद्वारमुद्घाटयन्ती निरय एव नगर निरयनगर नरकपुरम् । तस्य द्वारमुद्घाटयितु शील अस्या सा० । युक्तोऽयमर्थ अन्यापि या कुञ्चिका भवति सा द्वारमुद्घाटयति ननु । इय नायिका कुञ्चिका नरकद्वारकपाटमुद्घाटयति ॥ ३९ ॥

अथ नारीनदीवैषम्यमाह—

उन्मीलत्त्रिवलीतरङ्गवलया प्रोत्तुङ्गपीनस्तन-
द्वंद्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी ।
कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते
संसारार्णवमज्जनं यदि ततो दूरेण सत्यज्यताम् ॥ ४० ॥

हे आत्मन् ! । यदि चेत् ते तव संसारार्णवमज्जन ससारसमुद्रस्य ब्रुडन ते तव न इष्यते न वाञ्छ्यते । तत: तदा त्वया इयं नदी दूरेण संत्यज्यता दूरत परिवर्ज्यताम् । किं० नदी ? । कान्ताकारधरा कान्ताया वल्लभाया आकार दधतीति ( क विधर्तीति, ह छ दिधर्तीति [ धरतीति ? ] ) कान्ताकारधरा । वा अथ वा कस्य पानीयस्य अन्ता कान्ता [ अन्त कान्त ] आकार ( क छ अकार ) दधतीति ( क विधर्तीति ह छ दिधर्तीति ) कान्ताकारधरा । पुन किं० नदी ? । अभितश्चतुर्दिक्षु सर्वैरपि प्रकारै क्रूराशया दुष्परिणामा । पुन किं० नदी ? । उन्मीलत्त्रिवलीतरङ्गवलया उन्मीलन्त उल्लसन्त त्रिवलीतरङ्गाना [ णा ] वलया यस्या सा० । युक्तोऽयमर्थं । यत्र नदी भवति तत्र तरङ्गवलया स्यु । या कान्ताकारधरा नदी वर्तते सापि त्रिवलीतरङ्गवलया भवति ननु । पुनरपि किंविशिष्टा नदी ? । प्रोत्तुङ्गपीनस्तनद्वंद्वेनोद्यतचक्रवाकमिथुना । प्रोत्तुङ्ग पीनस्तनद्वंद्व प्रोत्तुङ्गपीनस्तनद्वंद्वम् । तेन प्रोत्तुङ्गपीनस्तनद्वंद्वेन उद्यत उदय प्राप्त चक्रवाकमिथुन यस्या सा उद्यतचक्रवाकमिथुना । इदमपि युक्तम् । नदीषु चक्रवाकमिथुना भवन्ति । इयमपि कान्तानदी पीनस्तनद्वंद्वेनोद्यतचक्रवाकमिथुना । पुन किं० नदी ? । वक्त्राम्बु-

१ ग ह्यात्म° । २ ग गाढ । ३ क भोजन । ४ ज कुञ्चितेव । ५ क °मर्जन ।

जोद्भासिनी । वक्रमेव अम्बुजं वक्राम्बुजं वक्राम्बुजमुद्भासयितुं शीलं अस्याः सा वक्राम्बुजोद्भासिनी । युक्तोऽयमर्थः । यत्र नदी भवति तत्राम्बुजानामुद्भास उत्पत्तिर्भवति । इयं कान्ता नदी वक्राम्बुजोद्भासिनी ॥ ४० ॥

अथ पञ्चेन्द्रियाणां चेष्टितमाह–

इह हि मधुरगीतं रूपमेतद्रसोऽयं
स्फुरति परिमलो[1]ऽसौ स्पर्श एष स्तनानाम् ।
इति हृत[2]परमार्थैरिन्द्रियैर्भ्राम्यमाणः
स्वहितकरणधूर्तैः पञ्चभिर्वञ्चितोऽसि ॥ ४१ ॥

हे आत्मन् ! । त्वं पञ्चभिरिन्द्रियैर्वञ्चितोऽसि । किं० इन्द्रियैः ? । स्वहितकरणधूर्तैः । स्वस्य हितं स्वहितम् । स्वहितकरणे धूर्तास्तैः स्वहितकरणधूर्तैः । पुनः किं० इन्द्रियैः ? । हृतपरमार्थैः । किं० त्वम् ? । इति अमुना प्रकारेण इन्द्रियैर्भ्राम्यमाणः भ्रान्तिं प्राप्यमाणः । इतीति किम् ? । हि निश्चितम् । इह मधुरगीतं इति श्रवणयोर्हितम् । एतद्रूपमिति नेत्रयोर्हितम् । अहो अयं रसः कटुतिक्त ( हृं. क. ख. च. त्यक्ता ) म्लमधुरमिष्टक्षारलवण इति रसनाया हितम् । असौ परिमलः सुगन्धलक्षण परिस्फुरतीति नासिकाया हितम् । एष सौकुमार्यः स्तनादीनां स्पर्श इति पञ्चभिरिन्द्रियैः स्वस्वहिताय वशीकृतोऽसि ॥ ४१ ॥

अथ स्त्रीभ्यः संसारनिस्तारे विषयवैषम्यतामाह–

संसार तव पर्यन्तपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ४२ ॥

रे संसार ! तव पर्यन्तपदवी तव निस्तारमार्गता न दवीयसी न दूरा । रे इति आक्षेपवाच्ये । रे संसार ! यदि चेत् अन्तरा [ मध्ये ] मदिरेक्षणा नार्यो न स्युः । किं० मदिरेक्षणाः ? । दुस्तराः दुःखेन तीर्यन्ते इति दुस्तराः । एतावता यद्येता नितम्बिन्यो न भवन्ति तदा संसारतरणस्य का किं वदन्ती ? ॥ ४२ ॥

अथ मनसः शिक्षामाह–

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा संचर मनःपान्थ यत्रा[3]स्ते स्मरतस्करः ॥ ४३ ॥

हे मनःपान्थ ! कामिनीकायकान्तारे मा संचर संक्रमणं मा कुरु । किं० कामिनीकायकान्तारे ? । कुचपर्वतदुर्गमे । कथम् ? । तत्र स्मरतस्करः आस्ते तिष्ठति ॥ ४३ ॥

---

१ ख. °लोऽयं । २ घ. हृतपरमा° । ३ फ. ख. च. छ. तत्रास्ते ।

अथ धन्यपुरुषस्य वर्णनमाह—

शृङ्गारद्रुमनीरदे प्रसृमरक्रीडारसश्रोतसि
प्रद्युम्नप्रियबान्धवे चतुरतामुक्ताफलोदन्वति ।
तन्वीनेत्रचकोरपार्वणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥ ४४ ॥

कोऽपि धन्यः पुमान् विक्रियां न कलयति विकार न भजतीत्यर्थ । क ? । नवे यौवने प्राप्ते सति । किंविशिष्टे यौवने ? । शृङ्गारद्रुमनीरदे शृङ्गार एव द्रुम. शृङ्गारद्रुम, शृङ्गारद्रुमस्य नीरदो मेघ शृङ्गारद्रुमनीरद, तस्मिन् । पुनरपि किं० यौवने ? । प्रसृमरक्रीडारसश्रोतसि । कोऽर्थ ? । प्रसृमर प्रसरणशील योऽसौ क्रीडारस तस्य श्रोत प्रवाह प्रसृमरक्रीडारसश्रोत, तस्मिन् । पुन किं० योवने ? । प्रद्युम्नप्रियबान्धवे । प्रद्युम्नस्य कामस्य प्रियो वल्लभो बान्धव प्रद्युम्नप्रियबान्धव, तस्मिन् । कन्दर्पवल्लभसहोदरे । पुन किं० योवने ? । चतुरतामुक्ताफलोदन्वति । चतुरता एव मुक्ताफलानि चतुरतामुक्ताफलानि । तेषामुदन्वान् समुद्र चतुरतामुक्ताफलोदन्वान्, तस्मिन् चातुर्यमुक्तामणिसमुद्रे । पुन किं० यौवने ? । तन्वीनेत्रचकोरपार्वणविधौ तन्व्या नेत्रचकोरौ तन्वीनेत्रचकोरौ, तन्वीनेत्रचकोरयो पार्वणविधु पूर्णि(त्व पोर्ण)मासीचन्द्र । तस्मिन् । पुन किं० यौवने ? । सौभाग्यलक्ष्मीनिधौ (ह विधो) सौभाग्यस्य लक्ष्म्या निधि सौभाग्यलक्ष्मीनिधि, तस्मिन् । एवंविधे नवे यौवने प्राप्ते स एव विद्वान् यो विक्रिया न सजते॥४४॥

अथ पुण्यदिप्या[क्षा]माह कवि —

यथातुरः पथ्यमरोचमानं जिजीविषुर्भैषजमाददीत ।
तथा यियासुर्भुवि लोकयात्रां भुञ्जीत भोगानविषक्तचित्तः ॥ ४५ ॥

यथा आतुरः रोगी जिजीविषुः जीवितुमिच्छु पथ्यमरोचमानं भेषजमौषधम् आददीत गृह्णीत । तथा तेन न्यायेन । भुवि पृथिव्या लोकयात्रां मोक्षमार्गं यियासुः प्राणी गन्तुमुत्कण्ठित प्राणी भोगान् अविषक्तः सन् नीरागचित्त सन् भुञ्जीत । यथा च प्रोक्तम् "आसन्नकालभवसिद्धियस्स जीवस्स लक्खण इणमो । विसयसुहेसु न रच्चइ सव्वत्थामेसु उज्जमइ" इति रहस्यम् ॥ ४५ ॥

अथ यौवनस्य दोषानाह—

रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतुर्
मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।
कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन् नह्यनर्थव्रजकुसुमवनं यौवनादन्यदस्ति ॥ ४६ ॥

१ ज. स्रोतसि । २ घ. सौरभ्य° । ३ ह. न च क्रियां ।

अस्मिन् लोके अनर्थव्रजकुसुमवनं यौवनादन्यत् नहि अस्ति। अनर्थानां व्रजः समूहः तस्य कुसुमवनम् अनर्थव्रजकुसुमवनम् । किं० यौवनादन्यत् ?। रागस्यागारमेकम्। रागस्य एकं आगारं गृहम्। पुनः किं० यौवनम् ?। नरकशतमहादुःखसंप्राप्तिहेतुः। नरकस्य शतानि यानि महादुःखानि तेषां या संप्राप्तिः तस्या हेतुः कारणम्। पुनरपि किं० यौवनम् ?। मोहस्योत्पत्तिबीजम्। पुनरपि किं० यौवनम् ?। ज्ञानताराधिपस्य ज्ञानचन्द्रस्य जलधरपटलं मेघवृन्दम्। पुनः किं० यौवनम् ?। कन्दर्पस्यैकमित्रम्। पुनरपि किं० यौवनम् ?। प्रकटितविविधस्पष्टदोषप्रबन्धम्। प्रकटिता विविधा ये स्पष्टदोषाः तेषां प्रबन्धं प्रकटितविविधस्पष्टदोषप्रबन्धं दोषाणां समूहमित्यर्थः। एतावता अनर्थस्य मूलं यौवनमेव ॥ ४६ ॥

अथ पञ्चाक्षरसस्वादमाह—

द्रष्टव्येषु[१] किमुत्तमं मृगदृशः प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं तदास्यपवनः श्रव्येषु[२] किं तद्वचः।
किं स्वाद्येषु[३] तदोष्ठपल्लवरसः स्पर्शेषु किं तत्तनुर्[४]
ध्येयं[५] किं नवयौवने सुहृदयैः[६] सर्वत्र तद्विभ्रमः[७] ॥ ४७ ॥

द्रष्टव्येषु पदार्थेषु किं उत्तमम् ? । मृगदृशो नायिकायाः मुखम्। किं० मुखम् ?। प्रेमप्रसन्नं स्नेहोल्लसितम्। घ्रातव्येष्वपि पदार्थेषु किमुत्तमम् ?। तदास्यपवनः तस्या नायिकाया आस्यस्य पवनः। श्र(श्रा)व्येषु [ श्रवणार्हेषु ] पदार्थेषु किमुत्तम् ?। तद्वचः तस्याः वचः वचनम्। स्वाद्येषु [ स्वादनार्हेषु ] पदार्थेषु उत्तमं किम् ?। तदोष्ठपल्लवरसः तस्या ओष्ठपल्लवरसः। स्पर्शेषु पदार्थेषु किमुत्तमम् ?। तत्तनुः तस्याः शरीरम्। सहृदयैः [ पुरुषैः ] नवयौवने नवीनतारुण्ये सर्वत्र किं ध्येयम् ?। तद्विभ्रमः तस्याः विभ्रमः तद्विभ्रमः। पञ्चानामपीन्द्रियाणां पञ्चस्थानानि प्रोक्तानि, तासां विभ्रमस्तु सर्वत्र ॥ ४७ ॥

अथ वाराङ्गनादोषानाह—

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुःकुलाय[८] च गलत्कुष्ठाभिभूताय च।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवस्पर्धया[९]
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ४८ ॥

को विवेकी पुमान् पण्यस्त्रीषु वाराङ्गनासु रज्येत स्नेहं कुर्वीत ?। अपि तु न कोऽपि। किं कुर्वतीषु ?। मनोहरं निजवपुः जात्यन्धाय यच्छन्तीषु ददतीषु। च अन्यत्। दुर्मुखाय

१ ज. दृष्टव्येषु। २ ख. घ. ज. श्राव्येषु। ३ ज. स्वादेषु। ४ ग. तद्वपुः। ५ ख. घ. किं ध्येयं। ६ ई. ब. च. सहृदयैः। ७ ख. ग. घ. तद्विभ्रमः। ८ छ. दुष्कुलाय। ९ ख. ग. घ. श्रद्धया।

निजवपुर्यच्छन्तीषु। जराजीर्णाखिलाङ्गाय च निजवपुर्यच्छन्तीषु। जराजीर्णं अखिलं अङ्गं यस्य स जराजीर्णाखिलाङ्गः, तस्मै जराजीर्णाखिलाङ्गाय। ग्रामीणाय पामराय निजं वपुर्यच्छन्तीषु। च अन्यत्। दुःकु(क)लाय पुरुषाय यच्छन्तीषु। गलित (गलत्) कुष्ठाभिभूताय निजमङ्गं यच्छन्तीषु। किं० वपुः?। मनोहरम्। कया?। लक्ष्मीलवश्रधया (श्रद्धया)। एवंविधासु पण्यस्त्रीषु कोऽधुना रज्येत?। किं० पण्यस्त्रीषु?। विवेककल्पलतिकाशस्त्रीषु विवेक एव कल्पलतिका विवेककल्पलतिका, तां प्रति शस्त्री विवेकल्पलतिकाशस्त्री, तासु विवेककल्पलतिकाशस्त्रीषु ॥ ४८ ॥

पुनरपि तस्या एव तिरस्कारमाह—

कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि[1]।
चारभटचौरचेटकनटविटनिष्ठीवनशरावम्[2] ॥ ४९ ॥

कः कुलजातः पुरुषः को वंशजातो वेश्याधरपल्लवं चुम्बति?। अपि तु न कोऽपि। किं० वेश्याधरपल्लवम्?। मनोज्ञ(ह. 'न्य—)मपि। थौतप्रक्षालितताम्बूलरञ्जितमपि। पुनरपि किं०?। चारभटचौरचेटकनटविटनिष्ठीवनशरावं चारभटाश्च नगारिणः, चौराः तस्कराः, चेटका दासाः मूल्यविक्रयगृहीताः, नटा भण्डाः, विटाः उत्तीर्णाः, तेषां निष्ठीवनस्य शरावकम्। एतादृशं वेश्याधरं कः कुलवान् चुम्बेत्?। अपि तु न कोऽपि ॥ ४९ ॥

पुनस्तमेवार्थमाह—

वेश्यासौ मदनज्वाला रूपेन्धनसमेधिता।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ५० ॥

असौ वेश्या मदनज्वाला कामज्वाला वर्तते। किं० ज्वाला?। रूपेन्धनसमेधिता। रूपमेवेन्धनं रूपेन्धनं, रूपेन्धनेन समेधिता संधुक्षिता (ह. संधुकिता) रूपेन्धनसमेधिता। चान्यत्। यत्र कामिभिः भुजंगिभिः यौवनानि चान्यत् धनानि हूयन्ते प्रज्वाल्यन्ते। पण्याङ्गनानामेतत्स्वरूपं विलोक्य को रज्येत?। अपि तु न कोऽपि ॥ ५० ॥

एतत् कामफलं लोके यद् द्वयोरेकचित्तता[4]।
अन्यचित्तकृते[6] कामे शवयोरिव संगमः[7] ॥ ५१ ॥

लोके लोकमध्ये एतत्कामफलं यद् द्वयोः स्त्रीपुंसोरेकचित्तता[5] चेतसि ऐक्यम्। कामे अन्यचित्ते कृते सति अन्योन्यरागरहिते संगमः संयोगः शवयोरिव मृतकयोरिव वर्तते ॥ ५१ ॥

---

१ ह. मनोन्यमपि। २ ग. 'भट्ट'। ३ क. ख. चोर। ग. भट। ४ ख. 'समृद्धता। ५ ख. घ. छ. स्त्रीपुंसोरे'। ६ ग. अन्यचित्ते। ख. घ. अन्योन्यरागरहितः संगमः शवयोरिव। ७ क. संगमे।

अथ कोकिलमलयपवनस्वरूपमाह—

मधुरयं मधुरैरपि कोकिलाकलकलैर्मलयस्य च वायुभिः ।
विरहितान् प्रणिहन्ति शरीरिणो विपदि हन्त सुधापि विषायते ॥५२॥

अयं मधुर्वसन्तः विरहितान् विरहिणः शरीरिणः प्रणिहन्ति । कैः ? । कोकिलाकलकलैः । च अन्यत् । मलयस्य च वायुभिः । किं० कोकिलाकलकलैः ? । किं० मलयस्य वायुभिः ? । मधुरैरपि अतीव मिष्टैरपि । चेत् कोकिलाकलकलाः मलयस्य च वायवो मिष्टा वर्तन्ते । तदा जनाः म्रियन्ते कथम् ? । सत्यं परम् । हन्त इति खेदे । विपदि कष्टे सति सुधापि विषायते विषमिवाचरति ॥ ५२ ॥

तावन्महत्त्वं पाण्डित्यं विवेकित्वं कुलीनता ।
यावज्ज्वलति नाङ्गेषु हतः पञ्चेषुपावकः ॥ ५३ ॥

सुगममिदम् ॥ ५३ ॥

अथ कन्दर्पाधिक्यमाह—

शंभुस्वयंभुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकर्मदासाः ।
वाचामगोचरचरित्रपवित्रिताय
तस्मै नमो भगवते मकरध्वजाय ॥ ५४ ॥

तस्मै मकरध्वजाय कन्दर्पाय नमः । किं० मकरध्वजाय ? । भगवते अचिन्तितमहिमयुक्ताय । येन मकरध्वजेन शंभुस्वयंभुहरयः ब्रह्मविष्णुमहेश्वराः हरिणेक्षणानां मृगाक्षीणां सततं निरन्तरं गृहकर्मदासाः अक्रियन्त । पुनः किं० ? । वाचामगोचरचरित्रपवित्रिताय वाचामगोचरेण वक्तुमशक्येन चरित्रेण पवित्रितः वाचामगोचरचरित्रपवित्रितः, तस्मै ॥ ५४ ॥

पुनरपि तस्यैव महिमानमाह—

श्रीमुद्रां मकरध्वजस्य परमां सर्वार्थसंपत्करीं
ये मूढाः प्रविहाय यान्ति कुधियः स्वर्गादिलोभेच्छया ।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचित् पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ५५ ॥

---

१ ग. घ. विरहिणः । २ ग. छ. हन्ति । ३ ग. घ. कुलीनत्वं विवेकिता । ख. मालूपायां अयं श्लोकः 'तावदेवामृतमयी'ति श्लोकेन सह मिश्रितः । ४ च. हरिणीदृश । ५ ग. शुम्भ । ६ ग. कुसुमायुधाय । ७ ख. (शोधनापूर्वं) दर्पकस्य नृपतेः; ज. कुसुमायुधस्य परमां । ८ ज. मं ।

ये कुधियः ये कुबुद्धय मकरध्वजस्य राज्ञ परमां प्रकृष्टा स्त्रीमुद्रां विहाय परित्यज्य। स्वर्गादिलोभेच्छया यान्ति व्रजन्ति। किं० स्त्रीमुद्राम्?। सर्वार्थसंपत्करीं कर्त्रीम्। किं०?। ते मूढाः मूर्खा। ते कुधियः। तेनैव कन्दर्पेण नग्नीकृताः मुण्डिताः। केचित् पञ्चशिखीकृताः पञ्चशिखतापसीकृता। चान्यत् जटिलाः जटाधारिण। चान्यत् अपरे कापालिकाः भरट्का [ह. भट्टारका]। कृत्वा कृत्वा विगोपिता। कि कृत्वा?। निर्दयतर निहत्य कुट्टयित्वा ॥ ५५ ॥

पुनस्तदेवाह—

विस्तारितं मकरकेतनधीवरेण स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ।
येनाविशत्तदधरामिषलोलमर्त्यमत्स्यान्विकृष्य स पचत्यनुरागवह्नौ ॥ ५६ ॥

मकरकेतनधीवरेण अत्र अस्मिन् भवाम्बुराशौ ससारसमुद्रे स्त्रीसंज्ञितं [स्त्री] नामाभिधान बडिशं मत्स्यबधन विस्तारितम्। येन कारणेन (क छ उद्धरत्) तदधरामिषलोलमर्त्यमत्स्यान् विकृष्य जलात् निष्काल्य अनुरागवह्नौ (स्व भस) पचति सत्कार करोति ॥ ५६ ॥

अङ्गनाना कृत्यमाह—

उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ५७ ॥

अङ्गना नार्यो यदारम्भन्ते। कस्मात्?। उन्मत्तप्रेमसंरम्भात्। उन्मत्तश्चासौ प्रेम [मा] उन्मत्तप्रेम [मा] तस्य सरम्भ उन्मत्तप्रेमसरम्भस्तस्मात् उन्मत्तप्रेमसरम्भात्। तत्र प्रत्यूहमाधातुं विघ्न कर्तुम्। खलु निश्चितम्। ब्रह्मापि कातरः कर्तुमशक्त। एतावता यदङ्गनाभिर्भवति तत्ताभिरेव नापरेण ॥ ५७ ॥

मृगीदृशा प्रेमस्वरूपमाह—

प्रणयमधुरप्रेमोद्गारा रसादलसास्तथा
भणितमधुरा मुग्धप्रायाः प्रकाशितसंमदाः।
प्रकृतिसुभगा विश्रम्भार्हाः स्मरोदयदायिनो
रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ ५८ ॥

मृगीदृशा नायिकाना स्वैरालापाः रहसि एकान्ते किमपि हरन्ति तद्वक्तु न शक्यते। किं० स्वैरालापा?। प्रणयमधुरप्रेमोद्गाराः प्रणयेन स्नेहेन मधुरा प्रणयमधुरा एवंविधा प्रेमोद्गारा। पुन कथमूता स्वैरालापा?। रसात् कामरसात् अलसाः मन्थरा। पुन किं०

१ क. (शोधनादनन्तर) छ येनोद्धरत्त°; ख. घ. येनाचिरात्त°। २ ग. [illegible] आरभंते। घ. आरमेते। ३ घ दंद्योपि। घ पद्य नास्ति। ४ ख ज. मधुरा। ५ ग. रसातलस्तथा। ६ ग. मुग्धाप्रायाः।

स्वैरालापाः ? । भणितमधुराः भणितं मधुरं यैः ते भणितमधुराः । पुनः किं० स्वैरालापाः ? । मुग्धप्रायाः प्रायेण मुग्धा मनोज्ञाः मुग्धप्रायाः । पुनः किं० स्वैरालापाः ? । प्रकाशितसंमदाः । प्रकाशितः संमदो हर्षो यैः ते प्रकाशितसंमदाः । पुनः किं० स्वै० ? । प्रकृतिसुभगाः । प्रकृत्या सुभगाः प्रकृतिसुभगाः सौभाग्योल्लासिनः । पुनः किं० स्वैरालापाः ? । विश्रम्भार्हाः विश्वासयोग्याः । पुनः किं० स्वैरालापाः० ? । स्मरोदयदायिनः । स्मरस्य कामस्य उदयं ददतीति स्मरोदयदायिनः । अत एव मृगीदृशां वचांसि व्यामोहकानि भवन्ति ॥ ५८ ॥

अथ मनोभीष्टमाह–

मालती शिरसि जृम्भणोन्मुखी चन्दनं वपुषि कुङ्कुमाविलम् ।
वक्षसि प्रियतमा मदालसा स्वर्ग एष परिशिष्ट आगतः ॥ ५९ ॥

प्राणिना एष परिशिष्टः प्रशस्तः स्वर्गः आगतः । एष कः ? । शिरसि मस्तके मालती जृम्भणोन्मुखी मघमघायमाना । एकस्त्वयं स्वर्गः । अन्यच्च वपुषि शरीरे चन्दनं कुङ्कुमाविलं कुङ्कुममिश्रितम् । वक्षसि हृदये मदालसा प्रियतमा मदनतारुण्यदर्पेण अलसा । पक्षे मदालसा देवी । अयमेव स्वर्गः ॥ ५९ ॥

पुनरेनमेवार्थमाह–

कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कं न वशं कुरुते भुवि रामा ॥ ६० ॥

रामा नारी । भुवि पृथिव्या कं कं वशं न कुरुते ? । अपि तु सर्वमपि । किं० रामा ? । कुङ्कुमपङ्ककलङ्कितदेहा । कुङ्कुमस्य पङ्केन कलङ्कितो लिप्तो देहो यस्याः सा० । पुनः किं० रामा ? । गौरपयोधरकम्पितहारा । गौरौ यौ पयोधरौ ताभ्यां कम्पितो हारो यस्याः सा० । पुनः किं० रामा ? । नूपुरहंसरणत्पदपद्मा । नूपुरेण हंसवद् रणन्तौ शब्दं कुर्वन्तौ पदपद्मौ यस्याः सा० । एवंविधा नितम्बिनी कं कं वशं न कुरुते [२] । अपि तु जगदपि ॥ ६० ॥

अधुना कामिनीनामतिशयाधिक्यमाह–

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीनाम् ।
याभिर्विलोलतरतारकदृष्टिपातैः
रुद्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ ६१ ॥

---

१ घ. कोशे पद्यमिदं नास्ति । ई. ए. मदालसाः । २ घ. कोशे पद्यमिदं नास्ति । ई. °देहाः । ३ ई. हाराः ४ घ. कोशे मूलं नास्ति । टीकामात्रमस्ति ॥ च. छ. ज. शक्रा° । ५ ख. ग. °जितास्त्वबलाः ।

हि निश्चितम्। ते कविवराः नूनं विपरीतबोधाः। पराङ्मुखतत्त्वज्ञानिनः। यत्ते कविवराः नित्यं निरन्तरं कामिनीनां नारीणां अबला इत्याहुः। ता अबलाः कथम्?। याभिः विलोलतरतारकदृष्टिपातैः रुद्रादयोऽपि विजिताः जिताः। महेन्द्रादयोऽपि हतविग्रहताश्चक्रिरे। विलोलतरा अत्यन्तं तारकदृष्टिपाताः विलोलतरतारकदृष्टिपातास्तैः ॥ ६१ ॥

कविस्तमेवोद्दिश्याह—

उद्वृत्तस्तनभार एष तरले नेत्रे चले भ्रूलते
[1]रेकाधिक्यतमोष्ठपल्लवदलं कुर्वन्तु नाम व्यथाम्।
सौभाग्याक्षरपङ्क्तिकेव लिखिता पुष्पायुधेन स्वयं
[2]मध्यस्था हि करोति तापमधिकं रोमावली केन सा ॥ ६२ ॥

सा रोमावली केन कारणेन अधिकं तापं करोति?। किं० रोमावली? मध्यस्था। ननु यः कोऽपि मध्यस्थो भवति स कस्यापि तापं कुरुते?। अपि तु न। इयं रोमावली नायिकायाः मध्यस्थापि तापं कुरुते इति दुःखं महत्। या रोमावली पुष्पायुधेन कामेन स्वयं स्वहस्तेन सौभाग्याक्षरपङ्क्तिका इव लिखिता। सौभाग्यस्य अक्षराणि सौभाग्याक्षराणि, सौभाग्याक्षराणां पङ्क्तिका इव पङ्क्तिका ननु या सौभाग्याक्षराणां पङ्क्तिका उच्यते, तस्याः परेषां पीडा न युज्यते इति भावः। नाम इति संबोधने। एते पदार्था उच्यमानास्तापं कुर्वन्तु। एते के?। य एष उद्वृत्तस्तनभारस्तापं करोतु। कथम्?। उद्वृत्तः कोऽर्थः?। उत् उन्नतं वृत्तं यस्य स उद्वृत्तः [आचारः तेन युक्तः स्तनभार उद्वृत्तस्तनभारः]। पुन. किं०?। नेत्रे तरले। ताभ्यां तापोऽपि युक्तः। ये ननु तरला भवन्ति चञ्चलाः स्युः। तेभ्योऽपि तापमुद्वहते जन.। पुनः किं०?। चले भ्रूलते। युक्तस्ततोऽपि तापः। कथम्। ते चले तस्मात्। पुन किं०?। रैका [क. च. रैका, ग. एका; ख. घ. ट. पेका] धिक्यतमोष्ठपल्लवदलं। रैकेण (ख. घ. एकेन) रागेण आधिक्यतम. योऽसौ ओ[ओ]ष्ठस्य (ख. ट. आधिक्यतमं यदोष्ठ) पल्लवदल तापं करोतु। तदपि युक्तम्। योऽसौ रागाधिकः स तापं तनुते। यतो रागो हि कारणं अनर्थपरंपराया.। एते चत्वारोऽपि ताप कुर्वन्ति तदा कुर्वन्तु। इयं रोमावली सरला (क. तरला; च. छ. सरला तरला) मनोहरा सौभाग्याधिका तस्याः तु न युक्तम् ॥ शार्दूलविक्रीडितं छन्द । श्लेषालंकार ॥ ६२ ॥

अथ युवतीगुणानाह—

स्वपरप्रतारकोऽसौ [3]निन्दति योऽलीकपण्डितो [4]युवतीम्।
[5]तस्मात् तपसोऽपि फलं स्वर्गः स्वर्गेऽपि [6]युवतयः सरसाः ॥ ६३ ॥

१ ग. रागाधिष्ठित°; घ. एकाधिक्यत°। २ ज. मध्यस्थापि। ३ क. छ. निन्दते। ४ ग. युवतिम्। ५ ख. घ. यस्मात्। ६ ह. सरसाः युवतयः; ज. °वयोऽप्सरसः।

[ असौ पण्डितः स्वपरप्रतारकः स्वं आत्मानं परं अन्यं प्रतारयतीति स्वपरप्रतारकः, योऽलीकपण्डितः युवतीं निन्दति । यस्मात्कारणात् तपसोऽपि फलं स्वर्गः स्वर्गेऽपि सरसाः युवतयः । ] तत् तस्मात् कारणात् सरसा युवतयः सत्त्वनप्यनार्यः पूर्वतपसैव प्राप्यन्ते । नान्यथा ॥ ६३ ॥

कस्या अपि वियुक्तायाः स्वरूपमाह—

विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् ।
स्तनोत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ ६४ ॥

काचिद् वियुक्ता नायिका वन ( हं. क. छ. नन; च. ट. छाया ) द्रुमाणां गृहोपवनवृक्षाणां छायासु विश्रम्य विश्रम्य विचचार । किं० नायिका ? । तन्वी कुमारी । किं कुर्वती ? । स्तनोत्तरीयेण वस्त्रेण शशिनो मयूखान् चन्द्रमःकिरणान् निवारयन्ती । किं० स्तनोत्तरीयेण ? करोद्धू-[द्धृ ?]तेन दक्षिणकरचालितेन ॥ ६४ ॥

अथ कामिनः स्वरूपमाह—

अदर्शने दर्शनमात्रकामा दृष्टौ परिष्वङ्गरसैकलोला ।
आलिङ्गितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम् ॥ ६५ ॥

सा काचिन्मनोहरा नायिका अदर्शने सति दर्शनमात्रकामा वर्तते । विलोकनावसानमनोरथा वर्तते । सा नायिका दृष्टौ सत्यां परिष्वङ्गरसैकलोला वर्तते । आयताक्ष्यां विस्तीर्णनेत्रायां आलिङ्गितायां परस्परं विग्रहयोः शरीरयोः अभेदमाशास्महे आशां कुर्महे ॥ ६५ ॥

पुनर्विलासिनीनां स्वरूपमाह—

उपरि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किंचिदुन्मीलितानाम् ।
उपरि सुरतखेदस्विन्नगल्लस्थलीना-
मधरमधु वधूनां पुण्यवन्तः पिबन्ति ॥ ६६ ॥

वधूनां नायिकानां अधरमधु पुण्यवन्तः पिबन्ति । किं० वधूनाम् ? । उपरि निपतितानाम् । पुनः किं० वधूनाम् ? । स्रस्तधम्मिल्लकानाम् । पुनः किं० वधूनाम् ? । मुकुलितनयनानाम् । पुनः किं० वधूनाम् ? । किंचिदुन्मीलितानाम् । पुनः किं० वधूनाम् ? । सुरतजनित ( क. च. च. छ. उपरिसुरतखेद [ ख. खेदा ] ) स्विन्नगल्ल ( स. गण्ड ) स्थलीनाम् ॥ ६६ ॥

---

१ ग. नवद्रु° । २ ख. घ. °सु काचिद्विचचार तन्वी । ३ सर्वत्र मातृकासु 'करोद्धृतेन' । ४ ज. °लोलाः । ५ हं. लिङ्गितायाः...यताक्ष्याः माशास्महे । ६ ग. च. नाशास्महे । ७ ग. ज. स्रस्त° । ८ हं. ज. सुरतजनित° । ९ ख. खेदात् स्विन्न°; घ. खेदाक्लिन्न° । १० ग. घ. °गण्ड° । ११ ख. घ. भाग्यवन्तः ।

५ शतक०

पारदेशिक (ह पारिदेशक) स्वरूपमाह—

किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तयापि किम्।
इत्यवीक्ष्य नवमेघमालिका न प्रयाति पथिकः स्वमन्दिरम् ॥ ६७ ॥

पथिक: स्वमन्दिर इति कारणात् न प्रयाति न गच्छति। किं कृत्वा?। नवमेघमालिका वीक्ष्य। नवोन्नतमेघ विलोक्य। सा मद्वल्लभा यदि चेन्न जीवति तदा गतेन किम्?। प्रियतमा चेद्यदि मद्वियोगेन प्राणिति जीवति तथापि गतेन किम्?। [सा मयि मोह न बिभर्ति अन्यथा जीवति] कथम्? ॥ ६७ ॥

अथ सुरतरसमाह—

आमीलितनयनानां यः सुरतरसो न संविदं कुरुते।
मिथुनैर्मिथोऽवधारितमचिंतमिदमेव कामनिर्वहणम् ॥ ६८ ॥

यः सुरतरसः यो विषयरस आमीलितनयनाना नायिकाना संविद् स्वाद न कुरुते। कि० स्याद्?। मिथुनैर्मिथः परस्पर अवधारितं ज्ञातम्। कामनिर्वहणं इदमेव यत् अचिंत मानितमित्यर्थ ॥ ६८ ॥

अथ स्त्रीचेष्टितमाह—

प्राङ् मा मेति मनोरमागतगुणं जाताभिलापं ततः
सव्रीड तदनु श्लथीकृततनु प्रत्यस्तधैर्यं पुनः।
प्रेमार्धस्पृहणीयनिर्भररतक्रीडाप्रगल्भं ततो
निःसङ्गाङ्गविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ ६९ ॥

कुलस्त्रीरत रम्यम्। किं० कुलस्त्रीरतम्?। इति अमुना प्रकारेण मनोरमागतगुणं मनोरमो (?म)आगतो गुण मनोरमागतगुण, तम्। इतीति किम्?। प्राक् पूर्वं मा मा इति निषेधनाम्यम्। पुन किं० कुलस्त्रीरतम्?। जाताभिलाप समुत्पन्नमनोरथम्। पुन किं० कुलस्त्रीरतम्?। तदनु सव्रीडं व्रीडासंयुक्तम्। पुनरपि किं०?। श्लथीकृततनु यथा भवति प्रत्यस्तधैर्यं निराकृतसाहसम्। ततस्ततोऽनन्तरं प्रेमार्धस्पृहणीयनिर्भररतक्रीडाप्रगल्भम्। प्रेम्ण अर्धं प्रेमार्धं, प्रेमार्धेन स्पृहणीय प्रेमार्धस्पृहणीयं तेन निर्भर रतक्रीडाप्रगल्भं यस्य तत्। ततस्ततोऽनन्तर निःसङ्गाङ्गविकर्षणाधिकसुखं निःशेष सङ्ग निःसङ्ग, निःसङ्ग अङ्ग निस्सङ्गाङ्ग तस्य विकर्षणेन अधिक सुख यस्य तत् निस्स०। एभि प्रकारै कुलस्त्रीरत रम्यम् ॥ ६९ ॥

---

१ ग प्राणति। २ ख घ इत्युदीक्ष्य। ३ ख घ यद्। ४ ख घ °रतो। ५ ग मनागनागतसुख। ६ ग श्लथोद्यम°। ७ ग प्रेमार्द्र°। ८ ग निर्झररस°। ९ ग निकर्षणा°।

पुनस्तस्या एव हेलान्तरमाह—

तावदेवामृतमयी[1] यावल्लोचनगोचरे[2] ।
[3]चक्षुःपथादपेता तु विषादप्यतिरिच्यते ॥ ७० ॥

नायिका यावल्लोचनगोचरे (ग) तावदेव अमृतमयी । तु पुनः चक्षुःपथात् दृष्टि-मार्गात् अपेता सती (ख. चक्षुःसंपातविरहे सति) दूरभूता सती विषादपि गरादपि अतिरिच्यते अधिका भवति ॥ ७० ॥

अथ कामापस्मारमाह—

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः ।
भ्रमावेशादङ्गे किमपि विदधद्भङ्गमसमं
स्मरापस्मारोऽयं भ्रमयति दृशं[4] घूर्णयति[5] च ॥ ७१ ॥

अयं स्मरापस्मारः दृशं दृष्टिं भ्रम (क. छ. भ्राम) यति । चान्यत् घूर्णयति । किं० स्मरापस्मारः ? । मन्त्राणां न गम्यः अन्योऽपस्मारः मन्त्राणां गम्यो भवति, परमयं न । अयं स्मरापस्मारः भैषज्यविषयो न भवति औषधसाध्यो न स्यात् । चान्यत् । अयं स्मरापस्मारः विविधैः शान्तिकशतैः प्रध्वंसं न व्रजति स्फेटयितुं न शक्यते । अयं स्मरापस्मारः भ्रमावेशात् अङ्गे शरीरे किमपि अपूर्वं भङ्गं विदधीत कुर्यात् । अतः कारणात् स्मरावेशो दुस्त्यजः ॥ ७१ ॥

पुनस्तदेवाह—

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ।
यदसुभ्रनेत्रसंचारसूचितो[6]ऽपि प्रवर्तते ॥ ७२ ॥

नूनं इति संभावनायाम् । मकरध्वजः कन्दर्पः तस्याः सुभ्रुवो नायिकाया आज्ञाकरो वर्तते आदेशकृत् वर्तते । अहो निखिलमपि जगत् सर्वं कामस्याज्ञावशंवदं वर्तते । स तु कामो नायिकायाः (ख. दयितायाः) आदेशकरः । कथमवगम्यते ? । यत् यस्मात्कारणात् तस्याः नायिकायाः । भ्रुनेत्रसंचारसूचितोऽपि प्रवर्तते निजव्यापारं कुरुते ॥ ७२ ॥

विरहिणः स्वरूपमाह कविः—

सति प्रदीपे सत्यग्नौ सत्सु नानामणीषु च ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ ७३ ॥

---

१ ख. कोशे इदं पद्यं द्विरस्ति । ख. अमृतमया इत्यपि । २ ख. गोचराः; स. ग. घ. गोचरा (ख. शोधनान्माक् गोचरे) । ३ ग. चक्षुःसंपातविरहे विषादपरिरिच्यते । ४ च. दृशां । ५ ग. पूर्णयति । ६ ह. संचारः शूचितेऽपि ।

वियोगी कामी इति वक्ति । अहो मृगशावाक्ष्या मृगनेत्रया वल्लभया बिना मे मम इदं जगत् तमोभूतं वर्तते अन्धकाररूप जातमस्ति । क सति ? । प्रदीपे सति । अन्यदन्धकार प्रदीपे सति याति पर नैतत् । अग्नौ सत्यपि इतरदन्धकार अग्नौ कृते सति याति नेद । चान्यन् नानामणीषु सत्स्वपि विविधमणीषु थाल्येषु दत्तेषु सत्सु अन्यदन्धकारं याति । परमेतन्न । एतावता सर्वेभ्योऽन्धकारेभ्यो विलासिना विरहान्धकार महत् ॥ ७३ ॥

अथ नायिकानामङ्गोत्थगुणमाह—

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ ७४ ॥

सा नायिका रत्नमयीव रेजे शुशुभे । केन ? । मुखेन । कि० मुखेन ? । चन्द्रकान्तेन चन्द्र इव कान्त चन्द्रकान्त तेन चन्द्रकान्तेन चन्द्रसदृशवदनेन । पक्षे चन्द्रकान्तेन मणिना । पुन कि० ? । शिरोरुहैः मूर्धानकेशै । कि० शिरोरुहै ? । महानीलैः । महान्तश्च नीलाश्च महानीला ते, कृष्णवर्णैरित्यर्थ । पक्षे महानीलै महानीलमणिभि । पुन काभ्याम् ? । पाणिभ्यां हस्ताभ्या । कि० पाणिभ्या ? । पद्मरागाभ्यां पद्मवत् रागो ययोस्तौ पद्मरागौ ताभ्या । पक्षे पद्मरागाभ्या पद्मरागमणिभ्या । अत कारणात् सा कामिना रत्नमयी मेने ॥ ७४ ॥

तस्या एव वर्णनमाह ।

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ ७५ ॥

सा नायिका ग्रहमयीव रेजे । अहो मानुष्यपि ग्रहमयीव कथम् । तदुच्यते । केन ? । स्तनभारेण । कि० स्तनभारेण ? । गुरुणा स्थूलेन । पक्षे गुरुणा गुरुचार्येण । पुन केन ? । मुखचन्द्रेण । कि० मुखचन्द्रेण ? । भास्वता देदीप्यमानेन । पक्षे भास्वता सूर्येण । पुन काभ्या ? । पादाभ्यां शनैश्चराभ्यां शनै गमनमन्थरगत्या चरत इति शनैश्चरौ ताभ्या शनैश्चराभ्याम् । पक्षे शनैश्चराभ्या ग्रहाभ्याम् ॥ अनया युक्त्या सा ग्रहमयीवोच्यते ॥ ७५ ॥

अस्या भ्रुवौ [भ्रुवो] वक्रत्वमाह—

असितात्मसु संबद्धः[3] समाविःकृतचापलः[4] ।
भुजंगकुटिलस्तन्व्या[5] भ्रूविक्षेपः खलायते ॥ ७६ ॥

तन्व्याः सुकुमारशरीराया भ्रूविक्षेपः खलायते दुर्जन इवाचरति । कि० भ्रूविक्षेप ? । असितात्मसु संबद्धः असित कृष्ण आत्मा येषा ते असितात्मान तेषु असितात्मसु दुर्जनेषु संबद्ध दुर्जनसगत इत्यर्थ । अन्योऽपि दुर्जन खल असितात्मसु दुर्जनेषु सबद्धो भाति बद्धस्नेहो भवति । पुन कि० भ्रूविक्षेप ? । समाविःकृतचापलः समाविः कृत प्रकटीकृत चापल येन [illegible] । अन्योऽपि

१ घ सरोरुहैः । २ ग गूढैः । ३ ख. ज. संबन्ध । ४ ख ग. घ. ज. समाविष्कृत । ५ ख तस्या ।

दुर्जनः प्रग(क)टितचापलो भवति। [ पुनः किं० भ्रूविक्षेपः?। भुजंगकुटिलः। भुजंगवत्कुटिलः भुजंगकुटिलः। अन्योऽपि खलः ] सर्पवत्कुटिलगतिः स्यात्। अतो भ्रुवोः खलसाम्यं युक्तं सदृक्षत्वात् ॥७६॥

अथ रामायाः विलासचातुर्यमाह–

मुग्धे धानुष्कता केयमपूर्वा तव दृश्यते।
यया[1] विध्यसि[2] चेतांसि गुणैरेव न सायकैः ॥ ७७ ॥

हे मुग्धे! इयमपूर्वा (हं. 'वेता) तव धानुष्कता का दृश्यते। या तव धानुष्कता चेतांसि विध्यति (छ. यया धानुष्कतया चेतांसि विध्यसि) परं गुणैरेव न सायकैः बाणैः ॥ ७७ ॥

अथ योगिभोगिनोर्निर्धारत्वमाह–

एको रागिषु राजते प्रियतमादेहार्धहारी हरो
नीरागेषु जिनो[3] विमुक्तललनासङ्गो न यस्मात्परः।
दुर्वारस्मरबाणपन्नगविषव्यासक्तिमूढो[4] जनः
शेषः कामविडम्बितो[5] हि विषयान् भोक्तुं न मोक्तुं क्षमः ॥७८॥

रागिषु पुरुषेषु एको हरो राजते। किं० हरः?। प्रियतमादेहार्धहारी प्रियतमायाः पार्वत्याः देहार्धहारोऽस्यास्तीति [ प्रियतमा ] देहार्धहारी। नीरागेषु पुरुषेषु एको जिनो राजते। किं० जिनः?। यस्मात्परोऽन्यो विमुक्तललनासङ्गो न। विमुक्तः ललनानां नारीणां सङ्गो येन स विमुक्तललनासङ्गः। शेषो जनो विषयान्भोक्तुं चान्यत् मोक्तुं न क्षमः। किं० शेषजनः?। कामविडम्बितः। पुन. किं० शेषजनः?। दुर्वारस्मरबाणपन्नगविषव्यासक्तिमूढः (व्यासङ्गमुग्धः) दुर्वारा वारयितुमशक्याः ये स्मरबाणाः त एव पन्नगाः तेषां विषस्य व्यासक्त्या मूढः (व्यासङ्गेन मुग्धो) दुर्वारस्मरबाणपन्नगविषव्यासक्तिमूढः ॥ ७८ ॥

दैवस्योचितानुचितस्वरूपमाह–

इदमनुचितमक्रमश्च पुंसां
यदिह जरस्यपि मान्मथा विकाराः।
यदपि[6] च न कृतं नितम्बिनीनां[7]
स्तनपतनावधि[8] जीवितं रतं वा[9] ॥ ७९ ॥

---

१ हं. यथा। २ क. ख. ज. विध्यति। ३ ज. जनो। ४ ख. ग. घ. व्यासङ्गमुग्धो। ५ ग. °तोऽस्ति। ६ घ. तदपि। ७ ज. यन्निवम्बि° हं. नितम्बिन्यानां। ८ ज. तदपि। ९ हं. °नार्द्धपि।

पुंसां पुरुषाणां इदं अनुचितं अक्रमश्च । यत्तु इह जरसापि वार्धक्येऽपि मान्मथाः विकाराः कन्दर्पोद्भूतदोषा । चान्यत् । यदपि नितम्बिनीनां नारीणां स्तनपतनावधिजीवितं वा अथवा रतं न कृतम् । तदपि अनुचितमक्रमश्च ॥ ७९ ॥

अथ वामाक्षीणां नेत्रपन्नगदंशस्वरूपमाह–

व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना

नीलाब्जद्युतिनाहिना [1]वरमहं [2]दष्टो न तच्चक्षुषा ।

[3]दष्टे सन्ति चिकि[4]त्सका दिशि दिशि प्रायेण धर्मार्थिनो

मुग्धाक्षीक्षणवीक्षितस्य नहि मे मन्त्रो न चाप्यौषधम् ॥ ८० ॥

अहं अहिना दष्टो वरम् । परं तु तच्चक्षुषा दष्टो न वरम् । तस्या नायिकाया चक्षु तच्चक्षु तेन । किं० चक्षुषा ? । भोगिना । पुन किं० चक्षुषा ? । नीलाब्जद्युतिना नीलकमलकान्तिना । पुन किं० चक्षुषा ? । व्यादीर्घेण कर्णान्तविश्रान्तेन । पुन किं० चक्षुषा । चलेन चपलेन । पुन किं० चक्षुषा ? । वक्रगतिना । पुन किं० चक्षुषा ? । तेजस्विना प्रबलगरलभाजिना । एवंविधेन सर्पेण दष्टो वरम् । परं नायिकायाश्चक्षुषा दष्टो न वरम् । कथम् । दष्टे सर्पदष्टे प्रायेण धर्मार्थिनः चिकित्सकाः दिशि दिशि सन्ति । पुन मुग्धाक्ष्या ईक्षणवीक्षितस्य कटाक्षविद्धस्य मे मम न मन्त्रं चान्यत् न औषधम् । एतावता सर्पदंशात् कटाक्षनिक्षिप्त विषमम् ॥ ८० ॥

अथ विरहसंगमयो स्वरूपमाह–

वि[5]रहेऽपि संगमः खलु परस्परं संगतं [6]मनो येषाम् ।

[7]हृदयमपि विघटितं संग[8]मेऽपि विरहं विशेषयति ॥ ८१ ॥

येषां पुरुषाणां मनः परस्परं संगतं मिलितं वर्तते । खलु निश्चितम् । तेषां मनुष्याणां विरहेऽपि संगमः । अपि पुन । हृदयं विघटितं सत् संगमेऽपि संयोगेऽपि विरहं विशेषयति । यदुक्तम्–आसन्ना दूरिहिं ठिया जे चिंतिहिं उव्विद्व ।

चिहु अणुल्कइ अंतरइ नयणे कस न दिट्ठ ॥ ८१ ॥

[ एतदनन्तरं प्रथितः प्रणयवतीनां इति श्लोक छ० कोशे दृश्यते । ]

पुनस्तदे(.[?] मे)वार्थमाह–

अपसर सखे दूरादस्मात् कटाक्षविषानलात्

प्रकृतिविषमाद् योषित्सर्पाद् विलासफणाभृतः ।

इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधैश्

चटुलवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ८२ ॥

---

१ ग. घ. वरमहो । २ ज. दष्टो । ३ ज. दष्टे । ४ ह च. [illegible] °त्सिया । ५ क. छ. विरहोऽपि । ६ ग. ज मनो न येषाम् । ७ ख. घ. अपि हृदयं; ग. हृदयमति । ८ ग. संगतेपि, ज. सत्सङ्गे । ९ ग. साक्षाच्चिकित्सितुमौषधं ।

हे सखे हे मित्र ! अस्मात् योषित्सर्पात् दूरादपसर दूरे भव । किं० योषित्सर्पात् ? । कटाक्षविषानलात् कटाक्ष एव विषानलः यस्य सः कटाक्षविषानलः तस्मात् । पुनः किं० योषित्सर्पात् ? । प्रकृतिविषमात् प्रकृत्या विषमः प्रकृतिविषमः तस्मात् । पुनः किं० योषित्सर्पात् ? । विलासफणाभृतः विलासफणावलिं बिभर्ति इति विलासफणाभृत् तस्मात् । इतरफणिना दष्टः प्राणी औषधैश्चिकित्सितुं शक्यः । हि निश्चितम् । चटुलवनितामोगिग्रस्तं प्राणिनं गारुडिकाः त्यजन्ति परिहरन्ति । एतावता अपरसर्पाद्योषित्सर्पस्तु महाभयंकरः ॥ ८२ ॥

अथ चेतसः प्रतिबोधमाह—

तस्याः स्तनौ यदि घनौ जघनं च हारि
वक्त्रं च चारु तव चित्त किमाकुलत्वम् ।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना नहि भवन्ति समीहितार्थाः ॥ ८३ ॥

रे चित्त ! तव आकुलत्वं किम् । यदि चेत्तस्याः नायिकायाः स्तनौ निबिडौ । चान्यत् जघनं काञ्चीतटं हारि मनोहारि । चान्यत् वक्त्रं चारु मनोहारि । तदा किमपि किं लभ्यते ? । अपि तु न । यदि चेत्तव तेषु पदार्थेषु वाञ्छा वर्तते तदा पुण्यं कुरु । कथम् ? । पुण्यैर्विना समीहितार्था न भवन्ति ॥ ८३ ॥

अथ विरहिणीनां स्वरूपमाह—

पान्थस्त्रीविरहानलाहुतिकथामातन्वती मञ्जरी
माकन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ।
अप्येते नवपाटलापरिमलप्राग्भारपाटच्चरा
वान्ति क्लान्तिवितानतानवकृतः श्रीखण्डशैलानिलाः ॥ ८४ ॥

अधुना सांप्रतम् । एते श्रीखण्डशैलानिलाः मलयाचलपवनाः वान्ति स्फुरन्ति । किं० श्रीखण्डशैलानिलाः ? । क्लान्तिवितानतानवकृतः क्लान्तेर्वितानं क्लान्तिवितानम् । क्लान्तिवितानस्य क्लान्तिसमूहस्य तानवं विस्तारं कुर्वन्तीति क्लान्तिवितानतानवकृतः । पुनः किं० श्रीखण्ड० ? । नवपाटलापरिमलप्राग्भारपाटच्चराः नवा नवीना या पाटला नवपाटला नवपाटलानां परिमलप्राग्भारः समूहस्तेन पाटच्चराः स्फाटयन्त. ( स्त. ग्राहिणः ) । अपि पुन. माकन्देषु सहकारवृक्षेषु मञ्जरी पिकाङ्गनाभिः कोकिलनायिकाभिः सोत्कण्ठं आलोक्यते निरीक्ष्यते । मञ्जरी किं कुर्वती ? । पान्थस्त्रीविरहानलाहुतिकथामातन्वती विस्तारयन्ती । विरह एव अनलः विरहानलः । विरहानले आहुतेः कथा विरहानलाहुतिकथा ताम् ॥ ८४ ॥

---

१ ख. घ. आलिङ्ग्यते ।

पुनरपि नायिकानां विरहस्वरूपमाह--

इतो विद्युद्वल्लीविलसितमितः केतकितरु-
स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ।
इतः केकिक्रीडाकलकलरवाः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ॥ ८५ ॥

**पक्ष्मलदृशां** नायिकानां **एते विरहदिवसाः** वियोगवासराः **कथं यास्यन्ति** । किं० विरहदिवसाः ? । **संभृतरसाः** संभृतो रसो येषां ते संभृतरसाः । कथम् । **इतो विद्युद्वल्लीविलसितम्** विद्युदेव वल्ली विद्युद्वल्ली विद्युद्वल्ल्याः विलसितं विद्युद्वल्लीविलसितम् । **इतः केतकितरुस्फुरद्गन्धः** केतकीनां तरवः केतकितरवः, तेषां स्फुरद्गन्धः केतकितरुस्फुरद्गन्धः । **इतः प्रोद्यज्जलदनिनदत्स्फूर्जितम्** प्रोद्यन्तः उन्नमन्तो ये जलदा मेघास्तेषां निनदतः (ता) स्फूर्जितं गर्जितं प्रोद्यज्जलदनिनदस्फूर्जितम् । **इतः केकिक्रीडाकलकलरवाः** केकिना क्रीडा केकिक्रीडा केकिक्रीडायाः कलकलरवाः शब्दाः केकिक्रीडाकलकलरवाः । एवंविधसंयोगे विरहिणीनां महद्दुःखम् ॥ ८५ ॥

अथ रामाणां विलासमुद्दिश्याह--

इमे तारुण्यश्रीनवपरिमलाः प्रौढसुरत-
प्रतापप्रारम्भाः स्मरविजयदानप्रतिभुवः ।
चिरं चेतश्चौरा अभिनवविकारैकगुरवो
विलासव्यापाराः किमपि विजयन्ते मृगदृशाम् ॥ ८६ ॥

**मृगदृशां** मृगाक्षीणां **इमे विलासव्यापाराः** सुरतोद्यमाः । **किमपि** अपूर्वा इव **विजयन्ते** सर्वोत्कर्षेण वर्तन्ते । किं० विलासव्यापाराः ? । **तारुण्यश्रीनवपरिमलाः** तारुण्यश्रीणां नवाः नवीनाः परिमलाः येषां ते तारुण्यश्रीनवपरिमलाः । पुनः किं० विलासव्यापाराः ? । **प्रौढसुरतप्रतापप्रारम्भाः** प्रौढो योऽसौ सुरतप्रतापः तस्य प्रारम्भो विद्यते येषां ते प्रौढसुरतप्रतापप्रारम्भाः । पुनः किं० वि० ? । **स्मरविजयदानप्रतिभुवः** [ स्मरस्य कामस्य विजयदानं स्मरविजयदानं तस्य प्रतिभुवः प्रतिसाक्षिणः स्मरविजयदानप्रतिभुवः । ] पुनः किं० वि० ? । **चिरं चेतश्चौराः** मानसपदव्यवोहराः । पुनः किं० वि० ? । **अभिनवविकारैकगुरवः** अभिनवविकारस्य एकगुरवः अभिनवविकारैकगुरवः । एवंविधाः विलासाः पुरन्ध्रीणां जयवादिनः प्रतिभान्ति ॥ ८६ ॥

---

१ क. छ. केतकतरु°; ख. केतकिनद°; ग. °तरोः । २ घ. °निनदस्फू° । ३ च. °तमित । ४ ज. केकी° ५ ग. °कल इतः पक्ष्मलदृशः । ६ ग. यास्यन्ते । ७ ग. नवपरिमल°.

अथ विलासिनीनां ( ᳚सितजनानां ) विलासप्रकारमाह–

आवासः किलकिञ्चितस्य[1] दयितापार्श्वे विलासालसाः[2]
कर्णे कोकिलकामिनीकलरवः स्मेरो[3] लतामण्डपः[4] ।
गोष्ठी सत्कविभिः समं कतिपयैर्मुग्धाः[5] सितांशोः[6] कराः
केषां[7] चित्तं सुखयन्ति चात्र हृदयं चैत्रे विचित्राः स्रजः ॥ ८७ ॥

चान्यदत्र चैत्रे चैत्रमासे एते प्रकाराः केषां चित् हृदयं सुखयन्ति सुखमुत्पादयन्ति । के के प्रकाराः ? । किलकिञ्चितस्य सुरतशब्दविशेषस्य आवासः । दयितापार्श्वे रमणीसमीपे विलासालसाः । पुनः किं० ? । कर्णे कोकिलकामिनीकलरवः कोकिलस्य कामिनी कोकिलकामिनी कोकिला इत्यर्थः । तस्याः कलरवः कोकिलकामिनीकलरवः । पुन. किं० ? । स्मेरो लतामण्डपः । पुनः किं० ? । कतिपयैः कविभिः ( ख. सत्कविभिः ) समं गोष्ठी । पुनः किं० ? । मुग्धाः सितांशोः कराः मुग्धा मनोज्ञाः सितांशोः चन्द्रमसः कराः किरणाः । अन्यत् किं० ? । विचित्राः स्रजः कुसुमवर्णैः गुंफिता मालाः । भाग्यवतां पुंसां एते प्रकाराश्चैत्रे सुखाय भवन्ति ॥ ८७ ॥

पुनस्तदेवमाह–

सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशिधरः[8]
प्रियावक्त्राम्भोजं मलयजरजश्चाति[9]सुरभिः[10] ।
स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने
करोत्यन्तःक्षोभं[11] न[12] तु विषयसंसर्गविमुखे ॥ ८८ ॥

यदिदं वक्ष्यमाणमखिलं समस्तं रागिणि जने विलासिनि पुरुषे अन्तःक्षोभं मानसविकारं करोति । न तु विषयसंसर्गविमुखे न हि जितेन्द्रिये । इदं किम् ? । सुधाशुभ्रं धाम । पुनः किं० ? । शशिधरः स्फुरदमलरश्मिः स्फुरन्त उल्लसन्तः अमलाः निर्मलाः रश्मयः किरणाः यस्य स स्फुरदमलरश्मिः । एवंविधः शशिधरः । पुनरपि किं० ? । प्रियावक्त्राम्भोजं वल्लभावदनकमलम् । किं० वक्त्राम्भोजं ? । मलयजरजश्चाति ( क. च. रजसा चाति᳚; छ. जरसा चाति᳚; ट. रसश्चाति᳚ ) सुरभिः ( च. सुरति ) । पुनरपि किं० ? । स्रजो हृद्यामोदाः मनोहरपरिमलाः । एते सर्वेऽपि रागिणि पुरुषे सुखावहाः । न तु विरागिणि ॥ ८८ ॥

---

१ क. घ. छ. किंचिद्स्य । २ ग. ज. विलासालसा । ३ च. स्मेरा । ४ क. ग. छ. ᳚मण्डपाः । ५ ग. सेव्याः । ६ ग. हिमांशोः; च. शितांशोः । ७ ग. केषां चित्सुखदानचित्तहृदयं चेष्टं विचित्राः स्रजः । ८ ग. शशधरः । ९ क. ᳚रजसाश्चाति᳚, छ. ᳚जरसश्चाति᳚ । १० क. छ. ᳚सुरभि । ११ छ. ᳚त्यन्तक्षोभं । १२ ज. ननु ।

कविरेकान्तस्थितिमाह—

आवासः क्रियतां गाङ्गे पापवारिणि वारिणि ।
स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ८९ ॥

रे चेत ! गाङ्गे वारिणि पानीये आवासः क्रियताम् । गङ्गाया इदं गाङ्गं तस्मिन् स्थितिर्विधीयताम् । किं० वारिणि ? । पापवारिणि पापस्फेटिनि । वा अथवा तरुण्याः स्तनमध्ये आवास क्रियता । किं० स्तनमध्ये ? । हारिणि अपूर्वे । पुन किं० ? । मनोहारिणि । सर्वं वितथम् ॥ ८९ ॥

अथ स्वैरिणीनामुद्दिश्याह—

असूचीसंचारे तमसि नभसि प्रौढजलद-
ध्वनिप्रादुर्भावे पतति पृषतां नीरनिचये ।
इदं सौदामिन्याः कनककमनीयं विलसितं
मुदं च म्लानिं च प्रथयति पथि स्वैरसुदृशाम् ॥ ९० ॥

इदं सौदामिन्याः विद्युतो विलसितं स्वैरसुदृशां स्वेच्छाचारिणीना पथि मार्गे मुदं चान्यत् म्लानिं पथयति विस्तारयति । किं० सोदामिन्या विलसितम् ? । कनककमनीयं कनकवत्कमनीय मनोज्ञ सुवर्णवन्मनोहरमित्यर्थ । क सति ? । तमस्यन्धकारे सति । किं० तमसि ? । असूचीसंचारे असूचीसन्चार सघनमित्यर्थ । पुन किं० तमसि ? । नभसि आकाशे प्रौढजलद-ध्वनिप्रादुर्भावे सति प्रबले मेघशब्दे प्रकटिते सति । पृषतां जलकणाना [ नीर ] निचये अम्भोनिचये सति । स्वेच्छाचारिणीना दुर्दिने घने सति हर्षोत्कर्षोऽपि भीतिरपि स्यात् ॥ ९० ॥

अथ रागस्थानमुद्दिश्याह—

केशाः संयमिताः श्रुतेरपि परं पारं गते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ।
मुक्तानां सततावधिवासरुचिरं वक्षोजकुम्भद्वयं
इत्थं तन्वि वपुः प्रशान्तमपि ते रागं करोत्येव नः ॥ ९१ ॥

हे तन्वि हे सुकुमारशरीरे ! ते तव वपुः शरीर नोऽस्माक रागं करोति एव । किं० वपु ? । इत्थं प्रोच्यमानम् । प्रशान्तमपि । इत्थ कथम् ? । केशाः संयमिताः सबद्धा । लोचने पर प्रकृष्ट श्रुतेरपि पार गते कर्णप्रान्तगते । चान्यत् वक्त्रमपि अन्तर्मध्ये द्विजानां गणैः

---

१ च °तारिणि, ज °हारिणि । २ घ पारिणि । ३ ख घ. मृगाक्ष्या । ४ ग. घ. असूर्चा° । ५ ग. घ. ज °संसारे । ६ क छ पृषताना च । ७ ख ग. संयमितः ।

दन्तानां समूहैः कीर्णं व्याप्तम् । किं० द्विजानां गणैः ? । स्वभावशुचिभिः निसर्गनिर्मलैः । वक्षोजकुम्भद्वयं स्तनकलशयुगलं मुक्तानां मुक्तामणिहाराणां सतताधिवाससुचिरं निरन्तरनिवाससुन्दरम् । एवंविधं नायिकानां वपुः शरीरं रागोत्पत्तिकृद् भवति ॥ ९१ ॥

अथ मानिनीनां मानपरिहारमुद्दिश्याह—

[1]प्रथितः प्रणयवतीनां तावत् पदं[2]मातनोतु हृदि मानः ।
[3]भवति न यावच्चन्दनतरुसुरभिर्मलयप[4]वमानः ॥ ९२ ॥

मानः प्रणयवतीनां नारीणां हृदि तावत् पदं स्थानं आतनोतु विस्तारयतु । किं० मानः ? । प्रथितः न प्रच्छन्नः प्रकट इत्यर्थः । यावत् मलयपवमानः मलयाचलपवनो न भवति न वाति । किं० मलयपवमानः ? । चन्दनतरुसुरभिः चन्दनवृक्षवत्सुगन्धिः । तस्मिन् पवने वीयमाने मानिनीनां मानो गर्वो गलति ॥ ९२ ॥

अथ वसन्तप्रभावमाह—

सहकारकुसुमकेसरनिकरभवामोदमूर्च्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेत् कस्य नोत्कण्ठा ॥ ९३ ॥

कस्य पुरुषस्य मधौ वसन्ते उत्कण्ठा न भवति । अपि तु सर्वस्यापि । किं० मधौ ? । मधुरमधुविधुरमधुपे मधुरो मनोज्ञो योऽसौ मधुस्तेन विधुरो विह्वलो मधुपो भ्रमरो यस्य [ सः ] मधुरमधुविधुरमधुपः तस्मिन् । पुनरपि किं० मधौ ? । सहकारकुसुमकेसरनिकरभवामोदमूर्च्छितदिगन्ते सहकारकुसुमस्य केसराः सहकारकुसुमकेसराः तस्य ( तेषां ) निकरः समूहः तद्भवामोदेन तत्समुत्पन्नपरिमलेन मूर्च्छितं व्याप्तं दिगन्तं येन [ स ] सहकारकुसुमकेसरनिकरभवामोदमूर्च्छितदिगन्तः तस्मिन् ॥ ९३ ॥

अथ विलासिनां निदाघमुद्दिश्याह—

स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः
परागः कासारो मलयजरजः सीधु[5] विशदम् ।
शुचिः सौधोत्सङ्गः प्रतनु वसनं[6] पङ्कजदृशो
निदाघर्तावेतद् विलसति लभन्ते सुकृतिनः ॥ ९४ ॥

निदाघर्तौ विलसति सति एतदुच्यमानं सुकृतिनो लभन्ते नापरे । एतत् किम् ? । हृद्यामोदाः स्रजः कुसुममालाः हृद्य आमोदो गन्धो यासां ता हृद्यामोदाः मनोहरपरिमला इत्यर्थः । एवंविधाः स्रजः । पुनः किं० ? । व्यजनपवनः पक्षकवातः । पुनः किं० ? । चन्द्रकिरणाः । पुनः किं० ? । कासारः परागः अनुस्नातस्नानीयद्रव्यं[?] । पुनः किं० ? । मलयजरजः चन्दनोत्पन्नचूर्णः । पुनः किं० ? । विशदं निर्मलं सीधु ( ग. सिन्धु ) मद्यम् । पुनः

१ ह. क. घ. प्रथित; ग. प्राय: । २ घ. °मातनोति । ३ ज. न भवति न याव° । ४ ग. °पवनः । ५ ग. सीधु । ६ ख. घ. वचनं ( ख. 'वसन' मित्यपि ) ।

कि० ? । सौधोत्सङ्गः धवलगृहाङ्कम् । किं० सौधोत्सङ्ग ? । शुचिः पवित्र । पुन किं० ? । प्रतनु वसनं स्वच्छवस्त्रम् । पुन किं० ? । पङ्कजदृशः कमलदलवद्दीर्घनयना नार्य । उष्णकाले सुकृतिनो रमन्ते ॥ ९४ ॥

[ एतदनन्तर छ कोशे 'आसारेण न हर्म्यतः' इत्यादिश्लोको दृश्यते । ]

अथ सौख्योत्पादकपदार्थानाह—

विियदुपरिसमेघं भूमयः कन्दलिन्यो
नवकुटजकदम्बामोदिनो गन्धवाहाः ।
शिखिकुलकलकेकारावरम्या वनान्ताः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ९५ ॥

एते पदार्था सुखिनं वा असुखिनं सर्वमुत्कण्ठयन्ति मनीषामुत्पादयन्ति । कि किम् ? । वियदाकाशम् उपरिसमेघं उन्नतजीमूतम् । पुन कि० ? । भूमयः कन्दलिन्यः कन्दाङ्कुरिता । पुन कि० ? । गन्धवाहाः नवकुटजकदम्बामोदिनः नवाना नवीनाना कुटजकदम्बाना आमोदयितु विकाशयितु शील येषा ते नवकुटजकदम्बामोदिन । पुन कि० ? । वनान्ताः शिखिकुलकलकेका-रावरम्याः शिखिना कुलानि शिखिकुलानि तेषा कलकेका (च शिखिकुलानि च कलकेकिनश्च) शिखिकुलकलकेका तेषा (तासा) रावेण शब्देन रम्या ये वनान्ता [ ते ] शिखिकुल-कलकेकारावरम्या । एते प्रकारा सौख्योपादका ॥ ९५ ॥

तरुणीवेषा[1] दीपितकामा[2] विकसितजातीपुष्पसुगन्धिः[3] ।
उन्नतपीनपयोधरभारा प्रावृट्[4] तनुते कस्य न हर्षम् ॥ ९६ ॥

एवंविधा रामा प्रावृषि वर्षाकाले कस्य पुरुषस्य हर्षं न तनुते न विस्तारयति । किं० रामा ? । तरुणीवेषा । पुन कि० रामा ? । दीपितकामा दीपित कामो यस्या सा । पुन किं रामा ? । विकसितजातीपुष्पसुगन्धिः विकसिता या जाती विकसितजाती विकसितजाती पुष्पवत् सुगन्धि विकसित० । पुन कि० रामा ? । उन्नतपीनपयोधरभारा उन्नतौ च यौ पीनौ उन्नतपीनौ । उन्नतपीनयो पयोधरयोर्भारो यस्या सा ॥ ९६ ॥

आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते
शीतोत्कम्पनिमित्तमायतदृशा[5] गाढं समालिङ्ग्यते[6] ।
जालैः शीकरशीतलाश्च मरुतो रत्यन्तखेदच्छिदो[7]
धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥ ९७ ॥

१ ग. °मेषा छ °रेषा । २ क दीप्ति° । ३ ग सुगन्धी । ४ ख घ प्रावृषि । ५ ख. छ °दृशो; ख. घ. °दृशा । ६ ग समालिङ्गते । ७ क छ. हत्यन्त°, ख. घ चात्यन्त°, ग. °प्यत्यन्त° ।

चतेति हर्षे। धन्यानां पुरुषाणां दुर्दिनं प्रियासंगमे सुदिनतां याति। दुर्दिनं मेघजं तमः। प्रियतमैः आसारेण हर्म्यतः वहिर्यातुं न शक्यते। आसारो वेगवान् वर्षः। आयतदृशो(? शा) नार्यः(? र्या) शीतोत्कम्पनिमित्तं शीतापगमाय पतिं(? ति) गाढं समालिङ्ग्यते। चान्यत्। मरुतः (हं. पुरतः) पवन(? नाः)जालगवाक्षे रत्यन्तखेदच्छिदः। किं० मरुतः?। शीकरशीतलाः शीकरैर्जलकणैः शीतलाः शीकरशीतलाः॥ ९७॥

अर्धं नीत्वा[1] निशायाः सरभससुरतायाससंश्लेषयोगैः
प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते।
संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो
ज्योत्स्नाभिन्नाच्छधारं[2] न[3] पिबति सलिलं शारदं मन्दभाग्यः॥९८॥

मन्दभाग्यः पुमान् शारदं शरत्कालीनं सलिलं पानीयं न पिबति कर्करीतः गर्गर्याः (क. च. छ. गर्गर्याः)। किं० सलिलं?। संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं संभोगेन क्लान्ता संभोगक्लान्ता एवंविधा या कान्ता [नारी] तस्याः शिथिलभुजलतया आवर्जितं आनीतं। पुनः किं० सलिलं?। ज्योत्स्नाभिन्नाच्छधारं ज्योत्स्नया [अ]भिन्ना [अ]पृथग्भूता अच्छा निर्मला धारा यस्य तत् ज्योत्स्नाभिन्नाच्छधारम्। किं० मन्दभाग्यः?। प्रोद्भूतासह्यतृष्णः प्रोद्भूता असह्या सोढुमशक्या तृष्णा येन स प्रोद्भूतासह्यतृष्णः। पुनः किं० मन्दभाग्यः?। मधुमदनिरतः मधुनो मदः मधुमदः मधुमदेन निरतः मधुमदनिरतः। क?। विविक्ते निर्जने (हं. निरंजने) हर्म्यपृष्ठे गृहपृष्ठप्रदेशे। किं कृत्वा?। निशाया अर्धं नीत्वा। कैः?। सरभससुरतायाससंश्लेषयोगैः सरभसः सोत्सुकः योऽसौ सुरतायासः तत्र ये संश्लेषाश्लेषा योगास्तैः सर०॥ ९८॥

प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृति विदलत्कुन्दमाद्यद्द्विरेफे
काले प्रालेयवातप्रचल[4]विकसितोद्दाममन्दारदाम्नि।
येषां नो[5] कण्ठलग्ना क्षणमपि तुहिनक्षोदरक्षा[6] मृगाक्षी
तेषामायामयामा[7] यमसदनसमा यामिनी याति यूनाम्॥९९॥

तेषां यूनां तरुणानां यामिनी रात्रिः आयामयामा दीर्घप्रहरा सती यमसदनसमा याति। यत्तदोर्नित्यसंबन्धः। येषां जनानां मृगाक्षी क्षणमपि नो कण्ठलग्ना। किं० मृगाक्षी?। तुहिनक्षोदरक्षा (ख. °दक्षा) तुहिनस्य तुषारस्य क्षोदाः तुहिनक्षोदाः तेषां रक्षतीति (ख. °दास्तत्र दक्षा) तुहिनक्षोदरक्षा। क सति?। प्रालेयवातप्रचल (ख. °चल) विकसितोद्दाममन्दारदाम्नि काले सति। प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृति काले सति, प्रोद्यन्तो ये प्रौढप्रियङ्गवः तेषां द्युतिं बिभर्तीति प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृत्। तस्मिन्। पुनः क सति?। विदलत्कुन्दमाद्यद्द्विरेफे

[1] ग. सुत्वा। [2] हं. योत्स्ना। [3] ग. पिबति न। [4] हं. क. च. छ. °प्रचल°। [5] क. च. छ. नोत्कण्ठ°। [6] ग. घ. °दक्षा। [7] ग. आयाति यामा।

काले सति। विदलन्तो ये कुन्दास्तेषु माद्यन्तो द्विरेफाः भ्रमराः यत्र सः विदलत्कुन्दमाद्यद्विरेफस्तस्मिन्॥ ९९॥

पुनस्तदेव–

हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः।
वृत्तोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते॥ १००॥

**धन्याः** पुरुषाः **ताम्बूलीदलपूगपूरितमुखाः सुखं** यथा भवति **शेरते** शयनं कुर्वते। ताम्बूलीदलानां पूगाः समूहाः तैः पूरितं मुखं येषां ते। अथ वा ताम्बूलैर्दलैः (ख. °ल्या दलैः) अन्यच्च पूगेन पूरितं मुखं येषां ते तथा। क्व? । **गृहाभ्यन्तरे** मन्दिरान्तः। किं० धन्याः? । **वृत्तोरुस्तनकामिनीजनकृताश्लेषाः** वृत्तोरुस्तनो यः कामिनीजनः तेन कृतः आश्लेषो येषां ते वृत्तोरुस्तनकामिनीजनकृताश्लेषाः। पुनरपि किं० धन्याः? । **हेमन्ते** शीतकाले **दधिदुग्धसर्पिरशनाः** दधिदुग्धसर्पींषि अशनं भोजनं येषां ते दधिदुग्धसर्पिरशनाः। पुनः किं० धन्याः? । **माञ्जिष्ठवासोभृतः** माञ्जिष्ठानि वासांसि बिभर्ति (बिभ्रति) इति माञ्जिष्ठवासोभृतः। पुनः किं० धन्याः? । **काश्मीरद्रवसान्द्रदिग्धवपुषः** काश्मीरद्रवेण काश्मीरचन्दनयक्षकर्दमेन सान्द्रं सघनं दिग्धं लिप्तं वपुः शरीरं येषां ते। पुनः किं० धन्याः? । **विचित्रै रतैः खिन्नाः** श्रान्ताः॥ १००॥

पुनः शिशिरकालमुद्दिश्य तदेवाह–

केशानाकुलयन् दृशो मुकुलयन् वासो बलादाक्षिपन्
आतन्वन् पुलकोद्गमं प्रकटयन्नावेगकम्पं गतौ।
वारं वारमुदारशीत्कृतमुखो दन्तच्छदान् पीडयन्
प्रायः शैशिर एष संप्रति मरुत् कान्तासु कान्तायते॥१०१॥

**प्रायः** स्वभावेन **एष शैशिरो मरुत् संप्रति** इदानीं **कान्तासु** रामासु **कान्तायते** कान्त इव आचरति कान्तायते पतिरिव भाति। मरुत् किं कुर्वन्? । कान्तानां **केशानाकुलयन्** धूनयन्। पुनः किं कुर्वन् मरुत्? । **दृशो मुकुलयन्** संकोचयन्। पुनरपि किं कुर्वन्? । **वासः** वस्त्रं **बलादाक्षिपन्**। पुनरपि किं कुर्वन्? । **पुलकोद्गमं** रोमोद्गमं (हं. रोमांचं) **आतन्वन्** विस्तारयन्। पुनरपि किं कुर्वन्? । **गतौ** गमने **आवेगकम्पं प्रक** (क. च. छ. प्रग) **टयन्**। पुनरपि किं कुर्वन्? । **दन्तच्छदान्** ओष्ठान् **पीडयन्**। किं० मरुत्? । **वारं वारमुदारशीत्कृतमुखः** (हं. °त्कृतिकृतः) उदाराः शीत्कृताः शीत्काराः मुखे यस्मात् स उदारशीत्कृतमुखः॥ १०१॥

१ ग. °दिग्ध°। २ ग. पीनोरु°। ३. घ. फोदान्। ४ ग. स्तोकं प्रकम्पं। ५ ख. घ. गतेः ग. गतेः। ६ ख. घ. °शीत्कृतकृतो; ग. °शीत्कृतिकृतो।

पुनस्तदेवाह—

चुम्बन्तो गैण्डभित्तीरलकवति मुखे शीत्कृतान्यादधाना
वैक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटाच्छ्रंसयन्तोंऽशुकानि
व्यक्तं कान्ताजनानां विटचरितभृतः शैशिरा वान्ति वाताः ॥१०२॥

शैशिरा वाताः शिशिरकालीनाः वाताः पवनाः वान्ति । वाताः किं कुर्वन्तः ? । गल्ल-भित्तीः कपोलपालीः चुम्बन्तः । पुनः किं कुर्वाणा वाताः ? । मुखे शीत्कृतान्यादधानाः शीत्कारवचनानि बिभ्राणाः । पुनः कि कुर्वन्तो वाताः ? । स्तनभरपुलकोद्भेदमापादयन्तः रोमाञ्चोद्गममुत्पादयन्तः । केषु ? । वक्षःसु । किं० वक्षःसु ? । उत्कञ्चुकेषु उत् ऊर्ध्वं गताः कञ्चुका येषां ते उत्कञ्चुकास्तेषु । पुनरपि किं० वाताः ? । व्यक्तं कान्ताजनानां विटचरित-भृतः । पुनः किं० वाताः ? । ऊरून् जंघाप्रदेशानाकम्पयन्तः । वाताः पुनः किं कुर्वन्तः ? । पृथुजघनतटात् अंशुकानि चीवराणि ( ह्. वस्त्राणि ) श्रंसयन्तः ( क. छ. संश्रयन्तः स्पर्शयन्तः ) अपनयन्तः ॥ १०२ ॥

अथ महतामवस्थामाह—

एकैव काचिन् महतामवस्था सूक्ष्माणि वस्त्राण्यथ वा च कन्था ।
कराग्रलग्नाभिनवा न बाला गङ्गातरङ्गेष्वथ वाऽक्षमाला ॥ १०३ ॥

महतां पुरुषाणां काचिदवस्था एकैव । का ? । सूक्ष्माणि वस्त्राणि अथवा कन्था । अथवा कराग्रलग्ना अभिनवा यौवनाभिरामा बाला । अथ च नो चेत्तदा गङ्गातरङ्गेषु अक्षमाला जापसत्योगस्थिता ( ह्. °स्था ) ॥ १०३ ॥

वैराग्यं संश्रयत्येको नीचौ भ्रमति चापरः ।
शृङ्गारे रमते कश्चिद् दृष्टिभेदः परस्परम् ॥ १०४ ॥

एकः कश्चित् पुमान् वैराग्यं संश्रयति नीरागत्वमाश्रयति । चान्यत् अपरो नीचौ भ्रमति । कश्चित् पुमान् शृंगारे रमते । कथं ? । यथा भवति परस्परं दृष्टिभेदः ॥ १०४ ॥

यद् यस्य नाभिरुचितं न तत्र तस्य स्पृहा मनोज्ञेऽपि ।
रमणीयेऽपि सुधांशौ न नाम कामः सरोजिन्याः ॥ १०५ ॥

---

१ टीकायां गल्लभित्तीः । २ क. ख. घ. वक्षस्युत्क°; ह्. क. च. छ. ज. वक्षस्सूत्क° ।
३ ख. ग. नीतौ ।

यस्य प्राणिनो यदभिरुचितं न तत्र मनोज्ञेऽपि पदार्थे तस्य स्पृहा न भवति वाञ्छा न स्यात् । अमुमेवार्थं कविर्दृष्टान्तेन द्रढयति । नाम इति संबोधने । सरोजिन्याः कमलिन्याः सुधांशौ चन्द्रमसि कामो न भवति उल्लासो न स्यात् (? भवति) । किं० सुधांशौ ? । रमणीयेऽपि ॥ १०५ ॥

ऊकेशगच्छगगनाङ्गणदीप्तभानोः
श्रीसिद्धसूरिसुगुरोर्महिमाधिकस्य ।
शिष्येण तस्य धनसारवरेण रम्या
टीकेयमत्र ननु भार्तृहरी व्यधायि ॥ १ ॥

॥ इति श्रीभर्तृहरकाव्यस्य द्वितीयशतकस्य टीकेयं विदधे ॥

---

१ ह. व्यधत्त ।

# अथ तृतीयं वैराग्यशतकम् ।

*

अथ वैराग्यशतकमाह–

दिक्कालाद्यनवच्छिन्नानन्तविज्ञानमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥

तस्मै शान्ताय तेजसे परब्रह्मणे नमः । किंविशिष्टाय शान्ताय (ख. च. कथंभूताय) तेजसे ? । स्वानुभूत्येकमानाय स्वकीयायाः अनुभूतेरनुभवात् एकं मानं यस्य स स्वानुभूत्येकमानस्तस्मै । पुनः किंविशिष्टाय शान्ताय तेजसे ? । दिक्कालाद्यनवच्छिन्नानन्तविज्ञानमूर्तये दिक् च कालश्च दिक्कालौ, ताभ्यां दिक्कालाभ्यां अनवच्छिन्ना अज्ञाता अनन्ता विज्ञानस्य मूर्तिर्यस्य स दिक्कालाद्यनवच्छिन्नानन्तविज्ञानमूर्तिः तस्मै ॥ १ ॥

अथ गुणहीनतास्वरूपमाह–

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अज्ञानोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २ ॥

योद्धारो ज्ञातारो मत्सरग्रस्ताः विरोधव्याप्ताः । प्रभवो नृपाः स्मयदूषिताः गर्वकलङ्किताः । चान्यत् । अन्ये अज्ञानोपहताः [ख. अबोधोपहता.] । अङ्गे शरीरे सुभाषितं जीर्णं स्थितिहीनम् । एते प्रकाराः महिमानं न प्राप्नुवन्ति ॥ २ ॥

संसारस्यानित्यतामाह–

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ३ ॥

संसारोत्पन्नं चरितं कुशलं नानुपश्यामि । पुण्यानां विपाकः फलं विमृशतो मे मम भयं जनयति संसारपरिभ्रमणत्वात् । कथं बिभेषि ? । चान्यत् । महद्भिः पुण्यौघैः महान्तः पञ्चेन्द्रियगोचराः विषयाः चिरपरिगृहीताः सन्तः विषयिणां प्राणिनां व्यसनं दातुमिव जायन्ते ॥ ३ ॥

---

ट. कोशे श्लोको नास्ति । अवतारिका परं दृश्यते । १ ख. घ. °चिन्मात्र° । २. ख. ग. घ. °न्यैक° । ३ ख. घ. अबोधोप° । ४ ज. मन्ये । ५ ग. च. छ. पुण्यौघैः । ६ ख. घ. व्यसनिनाम् ।

अथ तृष्णाधिकारमाह—

भ्रान्त्वा देशमनेकदुर्गविषमं प्राप्तं न किंचित् फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत्
तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ४ ॥

हे तृष्णे पापकर्मनिरते जृम्भणि ( हं. °म्भिणि ) सोल्लासे अद्यापि न संतुष्यसि न संतुष्टा भवसि । तद्दोषानुपदर्शयति ( हं. देशयति ) । हे तृष्णे ! अनेकदुर्गविषमं देशं भ्रान्त्वा भ्रान्त्वा किंचित्फलं न प्राप्तम् । हे तृष्णे ! उचितं योग्यं जातिकुलाभिमानं त्यक्त्वा निष्फला सेवा कृता । परगृहे मानविवर्जितं साशङ्कया भुक्तम् । किंवत् ? । काकवत् । हे तृष्णे ! सर्वमप्येतत्तदेवं( ? °वैव ) चेष्टितम् ॥ ४ ॥

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मंत्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मां त्यज ॥ ५ ॥

हे तृष्णे ! अधुना मां त्यज । कथम् ? । हे तृष्णे । तव प्रभावात् निधिशङ्कया क्षितितलं उत्खातम् । कथमप्यहं निधानं लभे इति वाञ्छया । हे तृष्णे । तव प्रेरणया गिरेर्धातवो ध्माताः । कदाचिदपि सौवर्णखानिं लभे ( हं. लभते ) । तथाप्यलाभे सति हे तृष्णे । सरितां पतिः समुद्रो निस्तीर्णः । हे तृष्णे ! नृपतयो यत्नेन संतोषिताः । हे तृष्णे ! मया श्मशाने निशा नीताः । केन ? । मंत्राराधनतत्परेण मनसा । तथापि मया काणवराटकोऽपि घर्षितकपर्दकोऽपि न प्राप्त ॥ ५ ॥

खलोल्लापाः सोढाः कथमपि तदाराधनपरैर्
निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥ ६ ॥

---

१ ज. भ्रान्त्या । २ ज. धनं । ३ हं. घ. छ. निष्फला । ४ क. परिग्रहे । ५ ख. घ. °साशङ्कितं । ६ ग. जृम्भसि; च. जृम्भिणि; हं. ज. जृम्भिणि । ७ घ. °निरतो । ८ ग. घ. संतुष्यति । ९ ज. संसेविताः । १० ख. घ. ज. प्राप्तः । ११ ख. घ. तृष्णे सकामा भव; ज. तृष्णेऽधुना मुञ्च माम् । १२ ज. खलोल्लासाः । १३ हं. ख. च. ज. धृतो चित्त° । १४ क. घ. ज. मोघाशे ।

हे आशे हे तृष्णे ! त्वं मोघासि निष्फला वर्तसे । अतो मां अपरं किं नर्तयसि किं नर्तनं कारयसि ? । कथम् ? । खलोल्लापाः दुर्जनकठोरशब्दाः सोढाः अनुभूताः । कैः ? । कथमपि महता कष्टेन तदाराधनपरैः । अपि पुनः शून्येन मनसा हसितं दन्तनिष्कासनं (हं. °चनं) कृतम् । किं कृत्वा ? । अन्तर्मानसे बाष्पं अश्रुपातं निगृह्य धृत्वा । [अपि पुनः] चित्तस्तम्भः कृतः शून्यमानसं विदधे । अपि पुनः प्रतिहतधियां गतबुद्धीनां पुरस्तात् अञ्जलिः कृतः । एवं सत्यपि हे आशे ! न कृतार्था असि ॥ ६ ॥

स्वादिष्ठं मधुनो घृतादिरसवद् यत् प्रस्रवत्यक्षरं
देवी वागमृतात्मनो रसवतस्तेनैव तृप्ता वयम् ।
कुक्षौ यावदमी भवन्ति धृतये भिक्षाहृताः सक्तवः
तावद् दास्यकृतार्जनैर्न हि धनैर्भोगान् समीहामहे ॥ ७ ॥

वयं दास्यकृतार्जनैर्धनैः हि निश्चितम् भोगान् न समीहामहे न वाञ्छामहे । दासत्वेन कृतमर्जनं समुपार्जितं (हं. °पार्जनं) येषां धनानां तानि दास्यकृतार्जनानि तैः । यावदमी भिक्षाहृताः सक्तवः कुक्षौ धृतये भवन्ति संतोषाय स्युः । या देवी वाक् अमृतात्मनः कवीश्वरस्य अक्षरं प्रस्रवति (हं. प्रस्रवति) प्रसूते तेनैव अक्षरेण वयं तृप्ताः संतुष्टाः । कथंभूतमक्षरम् ? । मधुनोऽपि स्वादिष्ठम् । किंवत् ? । घृतादिरसवत् यथा घृतादिरसः । आदिशब्दात् क्षीरखण्डघृतानीव । किं० अमृतात्मनः कवीश्वरस्य ? । रसवतः नवरसमयस्य ॥ ७ ॥

अथ प्रमादस्तुदिस्याह—

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ८ ॥

इदं जगत् उन्मत्तभूतं वर्तते । किं कृत्वा ? । मोहमयीं प्रमादमदिरां पीत्वा । कथम् ? । अहरहः दिनं दिनं प्रति आदित्यस्य गतागतैर्जीवितं संक्षीयते आयुस्त्रुट्यति । बहुकार्यभारगुरुभिर्व्यापारैः कालो न विज्ञायते । चान्यत् । जन्मजराविपत्तिमरणं दृष्ट्वा त्रासो नोत्पद्यते । जन्म च जरा च वियोगश्च मरणं च जन्मजराविपत्तिमरणम् । अतः कारणात् प्रमादस्तु मदिरा प्रोच्यते । यथा मदिरापायी (°यी) हालां पीत्वा चेतना न धत्ते । जीवितं संक्षीयमाणं (छ. संक्षीयते मानं) नावगच्छति । अन्यच्च यान्तं कालं न जानाति । अन्यच्च त्रासो न समुत्पद्यते । तथा अयमपि प्रमादमदिरोन्मत्तो जीवो व्यतीयमानं जीवितं न वेत्ति यान्तं कालमपि नाभिजानाति । मरणादिभ्यस्त्रासोऽपि न भवति ॥ ८ ॥

---

१ ग. च. प्रसूय° । २ ख. घ. यौवनं । ३ ख. ग. घ. °विपत्ति° । ४ ज. त्रासस्तु ।

दीनादीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्नरैर्न विधुरा दृश्येत चेद् गेहिनी ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत् स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥९॥

को मनस्वी पुमान् कोऽभिमानी पुरुषः स्वदग्धजठरस्यार्थे स्वकीयदु.पूरोदरपूरणाय इति वदेत् ? । इतीति किम् ? । देहि । कथं ? । यथा भवति गद्गदगलत्त्रुट्यद्विलीनाक्षरं गद्गदगलन्ति च त्रुट्यन्ति च विलीनानि च विलयं गतानि अक्षराणि यत्र तत् गद्गदगलत्त्रुट्यद्विलीनाक्षरम् । केन ? । याच्ञाभङ्गभयेन याच्ञाया भङ्गः याच्ञाभङ्गः तस्य भयं याच्ञाभङ्गभयम् तेन । अन्यच्च । चेद्यदि नरैर्मनुष्यैर्गेहिनी गृहिणी सदैव सर्वदैव क्षुधितैः शिशुकैः आकृष्टजीर्णाम्बरा सती विधुरा न दृश्येत व्याकुला न विलोक्येत । किं० शिशुकैः ? । क्रोशद्भिः रुदद्भिः । पुन. किं० शिशुकैः ? । दीनादीनमुखैः । दीनानि च अदीनानि च मुखानि येषां ते दीनादीनमुखास्तैः ॥ ९ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ १० ॥

अहो इत्याश्चर्ये । अयं कायः अयं देहः तदपि मरणापायचकितः । तदपि किम् ? । निवृत्ता भोगेच्छा । चान्यत् । पुरुषबहुमानो विगलितः । अन्यच्च समानाः समानवयस. सुहृदो मित्राणि [ सपदि शीघ्रं ] स्वर्याताः सुरलोकं प्रापु । किं० सुहृदः ? । जीवितसमाः प्राणतुल्याः । यदि चेत् शनैरुत्थानं अर्थादुपवि(वे)शनं च । चान्यत् । नयने घनतिमिररुद्धे जाते । तथाप्ययं कायः मरणाद् बिभेति मरणं नेच्छतीत्यर्थः । किं० कायः ? । धृष्टः निर्लज्जः ॥ १० ॥

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत् कल्पितं
व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ११ ॥

व्यालानां सर्पाणां धात्रा विधात्रा अशनं भोजनं मरुत् पवनः कल्पितम् । किं अशनम् ? । हिंसाशून्यं हिंसारहितम् । पुनः किं० अशनं ? । अयत्नलभ्यं सुलभम् । तथा पशवः

---

१ ज. दीनां । २ ख. ग. ज. °गलत्त्रु° । ३ घ. सहृदो । ४ ज. यष्टोत्पानं । ५ ख. ष्टः । ६ ग. सृष्टाः ।

तृणाङ्कुरभुजः बालतृणपल्लवभोजिनः सृष्टाः निष्पादिताः । किं० पशवः ? । स्थलीशायिनः । धात्रा विधात्रा नृणां मनुष्याणां वृत्तिः सा काचिद्विनिष्टा कृता । यां वृत्तिं सततं निरन्तरं अन्वेषयतां सर्वे गुणाः समाप्तिं यान्ति निष्टि[त]ता यान्ति । किं० नृणां ? । संसारार्णवलङ्घनक्षमधियां संसारसमुद्रतरणसमर्थबुद्धीनाम् ॥ ११ ॥

न ध्यातं पदमीश्वरस्य विधिवत् संसारविच्छित्तये
स्वर्गद्वारकवाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ १२ ॥

वयं एव निश्चयेन केवलं [ मातुः ] यौवनवनच्छेदे कुठाराः जाताः स्मः । कथम् ? । यत् ईश्वरस्य पदं परमानन्दस्वरूपं शुक्लध्यानं [ विधिवत् ] न ध्यानम् । किमर्थम् ? । संसारविच्छित्तये संसारनिस्ताराय । अन्यच्च धर्मोऽपि नोपार्जितः । [ किं० धर्मः ? । स्वर्गद्वारकपाटपाटनपटुः । ] तथा च नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितम् । अतः कारणात् मातुस्तारुण्यवनच्छेदे वयं शुद्धाः कुठाराः ॥ १२ ॥

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥१३॥

अस्माभिर्भोगा न भुक्ताः । वयमेव भुक्ताः । अस्माभिस्तपो न तप्तम् । तदा वयमेव तप्ताः नारकिकैः संतापिताः । कालो न यातः । वयमेव याताः मरणमार्गं याताः । इयं तृष्णा कदाचिदपि न जीर्णा । वयमेव जीर्णाः ॥ १३ ॥

आत्मनो निरास(श)पदमाह—

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितः प्राणैर्न शंभोः पदं
तत् तत् कर्म कृतं तदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः ॥१४॥

अस्माभिः मुनिभिः तदेव तत्तत्कर्म कृतम् । तैस्तैः फलैर्वञ्चिताः स्मः । यत् यस्मात्कारणात् क्षमया न क्षान्तम् । अन्यच्च । गृहोचितसुखं न त्यक्तम् । कस्मात् ? । संतोषतः । तथा दुःसहशीतवाततपनाः न सोढाः तपो न तप्तं च । अन्यच्च अहर्निशं

१ ख. घ. °पटुध.° । २ ग. °जुगलं, ज. °युगुलं । ३ ग. मातः । ४ ख. घने छेदे । ५ ख. °तपनात्, ग. °तयना, च. °पवनात् । ६ ज. क्लेशात्र । ७ ख. घ. छ. चित्तम् । ८ ख. ज. नियमितः । ९ ख. घ. यदेव ।

नियमतः निश्चयत प्राणैः चित्तं ध्यातं न शंभोः पदम् । अत एव प्राणिभि तत्कर्म कृत, येन कर्मणा तेस्ते फलैर्वञ्चिता ॥ १४ ॥

वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १५ ॥

मुखं वलिभिराक्रान्तं पलितैः शिरः अङ्कितम् । गात्राणि शिथिलायन्ते । एका दुराशया तृष्णा तरुणायते ॥ १५ ॥

अथानित्यतामाह—

येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १६ ॥

निशि रात्रौ येनैव अम्बरखण्डेन चन्द्रमाः संवीतो गत । च अन्यत् । तेनैव अम्बरखण्डेन दिवा वासरे भानुः सूर्य संवीत गत । अहो इति दुःखे । एतयोः सूर्यचन्द्रमसो दौर्गत्यं विलोक्यताम् ॥ १६ ॥

अथ विषयनिरक्ततामाह—

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयममून् ।
व्रजन्तः स्वातंत्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १७ ॥

एते विषयाः पञ्चाङ्गभोगलक्षणा अवश्यं निश्चित यातारः गमिष्यन्ति । किं कृत्वा[1] । चिरतर चिरकाल उषित्वापि स्थित्वापि । जनो लोक यत् अमून् विषयान् स्वयं न त्यजति तद्वियोगे को भेदः किमाधिक्यम्[2] । एते विषया स्वातंत्र्यात् [ स्वाधीनात् आत्मवशात् ] व्रजन्तः गच्छन्त मनसः आत्मन अतुलपरितापाय भवन्ति प्रभवन्तु स्वाय स्तु । हि निश्चितम् । एते स्वयं त्यक्ताः सन्त अनन्तं शमसुख उपशमशर्म ( स च मोक्षसुख ) विदधति । अत कारणात् एते विषया स्वय त्यक्ता मोक्षसु( [3] सो)त्पादका इत्यर्थ ॥ १७ ॥

अथ तृष्णामधिकृत्याह—

विवेकव्याक्रोशे विदधति शमे शाम्यति तृषा
परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ।

---

१ 'वलीभि' इत्यपि मातृकासु । २ ख घ विषयान् । ३ ज त्यक्त्वा । ४ ख घ निवेके । ५ ख च निस्सरति च निस्सरति ।

जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणः
कृपापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १८ ॥

तृषा तृष्णा शमे उपशमे सति शाम्यति उपशमं गच्छति। क सति? विवेकव्याकोशे [ विवेकस्य ] विकाशे विदधति सति। सा परिणतिः तृष्णापरिणामः तुङ्गे परिष्वङ्गे आश्लेषे सति [ प्रसरतितरां ] तरां (? नितरां) प्रसरति। युक्तोऽयमर्थः—अप्यपि या विलासिनी भवति सा तुङ्गे परिष्वङ्गे सति तरां ( ? नितरां ) प्रसरति। न तु व्याप्तिं भजते। लब्धावकाशत्वात्। तथा सा तृष्णापि। मरुतां देवानामप्यधिपतिः इन्द्रः यस्यां तृष्णायां कृपापात्रं भवति। तुङ्गे परिष्वङ्गे छेत्तुं अशक्तो भवतीत्यर्थः। मनुजानां तु का कथा?। किंविशिष्टो मरुतामधिपतिः?। जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणः जरसा जीर्णमैश्वर्यं जराजीर्णैश्वर्यं तस्य ग्रसनेन यद् गहनं जराजीर्णैश्वर्यग्रसनगहनं तस्य आक्षेपे कृपणः विध्वंसे असमर्थः। अतः कारणात् तृष्णा गरीयसी ॥ १८ ॥

मदनविडम्बनामाह—

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूतिक्लिन्नः कृमिकुलशतैरावृततनुः।
क्षुधाक्षामो जीर्णः पिठरजकपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥ १९ ॥

श्वा कुर्कुरः शुनीमन्वेति। किं० श्वा?। कृशो दुर्बलः काण एकदृक् खञ्जो भग्नपादः श्रवणरहितः छिन्नकर्णः पुच्छविकलो लाङ्गूलरहितः। व्रणी पिटकव्याप्तः स्फोटकव्याप्तः। पूतिक्लिन्नः पिरु ( ख. पिरू ) परिप्लुतः। पुनरपि किं० श्वा?। कृमिकुलशतैरावृततनुः। पुनः किं० श्वा?। क्षुधाक्षामः। पुनः किं० श्वा?। जीर्णः जरसाक्रान्तः। पुनः किं० श्वा?। पिठरजकपालार्पितगलः करण्डमुण्डसमर्पितमुखः। एवंविधो मर्तुकामोऽपि श्वा शुनीमन्वेति अनुसरति। तदपि मदन एव निश्चयेन हतमपि हन्ति ॥ १९ ॥

विषयाणां धिक्कारमाह—

भिक्षाशनं[3] तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम्।
वस्त्रं च जीर्णशतखण्डमयी च कन्था
हा हा तथापि विषया न परित्यजन्ति ॥ २० ॥

हा हा इति खेदे। विषयास्तथापि न परित्यजन्ति केटकं ( समीपं ) न मुञ्चन्ति। तथापि किम्?। भिक्षाशनं तदपि नीरसं रसरहितं। तदप्यशनं एकवारम्। चान्यत्। शय्या

१ ज. क्षपणः। २ ख. छ. पिठरकं। ३ ख. च. भिक्षासनं।

मूः। अन्यच्च परिजनो निजदेहमात्रम्। चान्यत् वस्त्रं शतखण्डमयी कन्था। तथापि विषयाः दुराशयाः [ विषोपमा ] विगोपयन्ति प्राणिनाम् उदक्ष ( ? ) ॥ २० ॥

रूपतिरस्कारमाह—

स्तनौ मांसग्रन्थी कनकलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम्।
स्रवन्मूत्र[1]क्लिन्नं करिवरकर[2]स्पर्धि जघनं
अहो निन्द्यं रूपं कविजनविशेषै[3]र्गुरु कृतम् ॥ २१ ॥

अहो इति दुःखे। रूपं निन्द्यम्। कविजनविशेषैः गुरु कृतम्। स्तनौ मांसग्रन्थी परमित्युपमितौ उपमानितौ। इतीति किम्?। कनककलशौ। चान्यत् मुखं श्लेष्मागारं तदपि शशाङ्केन तुलितम् चन्द्रमसा समानं कृतम्। जघनं थ( स्र )वन्मूत्रक्लिन्नं तथापि करिवरकरस्पर्धि गजेन्द्रशुण्डादण्डेन स्पर्धाकृत् स्पर्धाकारकम्। रूपस्येति स्वरूपम्। परं तु कविना व्यावर्णितम् ॥ २१ ॥

अजानन् माहात्म्यं पतत[4]ु शलभस्तीव्र[5]दहने
स मीनो[6]ऽप्यज्ञानाद् बडिश[7]युतमश्नातु[8] पिशितम्।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ २२ ॥

अहह इति खेदे। मोहमहिमा गहनो वर्तते। यत्तु शलभः पतङ्गः दीपशिखायां पततु। शलभः किं कुर्वन्?। माहात्म्यमजानन्। अन्यच्च स मीनो मत्स्यः अज्ञानान्मौढ्यात् ( छ. मौढ्यतः ) बडिशयुतं पिशितं मांसं अश्नातु भक्षतु। इह अस्मिन् संसारे एवं वयं विजानन्तोऽपि कामान्न मुञ्चामः। किं० कामान्?। विपज्जालजटिलान् विपदां जालः विपज्जालस्तेन जटिला विपज्जालजटिलास्तान् विपज्जालजटिलान्। अत एव मोहमहिमा गहनो गरीयान् ( ई० गरीयसी ) ॥ २२ ॥

अथ दुर्जनमुद्दिश्याह—

विरामल[9]मशनाय स्वादुपानाय तोयं
शयनमवनिपृष्ठे[10] वल्कले[11] वाससी च।

---

१ ख. छ. श्रवन्मू°। २. ज. °कट°। ३. ख. घ. कुकविविकल्पैर्; ज. कविवरविशेषैर्। ४ ख. घ. छ. पतति। ५ ख. घ. तत्र। ६. घ. मीनोप्यज्ञानाद्; च. ज. मीनोपि ज्ञानाद्। ७ ई. विडरा°। ८ ख. घ. छ. मश्नाति। ९ ख. विसमल°; ग. छ. विरामल°; ग. ज. विषमल°। १० ई. छ. पृष्ठे ( टीकायामपि )। ११ ई. वल्कली वाससे; ख. घ. वाससी वल्कले।

नवघनमधुपानभ्रान्तसर्वेन्द्रियाणां
अविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २३ ॥

**वयं दुर्जनानां** पिशुनानां **अविनयमनुमन्तुं** अङ्गीकर्तुं **नोत्सहे** नोत्साहं कुर्महे । कथंभूतानां दुर्जनानां ? । **नवघनमधुपानभ्रान्तसर्वेन्द्रियाणाम्** नवं नवीनोपार्जितं धनं नवधनं तदेव मधुपानं मदिरापानं तेन मधुपानेन भ्रान्तानि सर्वाणि इन्द्रियाणि येषां ते नवधनमधुपानभ्रान्तसर्वेन्द्रियास्तेषाम् । अलं अत्यर्थम् । **अशनाय** भोजनाय **बिसं** कमलिनीकन्दं वरम् । चान्यत् । **स्वादुपानाय तोयं** वरम् । चान्यत् । **अवनिपृष्ठशयनम्** । चान्यत् । **वाससे**(सी) **वल्कली** ( ले ) वल्कलचीवरं वरम् ॥ २३ ॥

अथ मानिनामुद्दिश्याह—

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २४ ॥

**पुंसां** पुरुषाणां **क एष मदज्वरः** । क सति ? । **कतिपयपुरस्वाम्ये सति** । **धन्यैः कैश्चित् पुरा** पूर्वं **जगज्जनितं** जगत् सृष्टम् । किं० धन्यैः ? । **विपुलहृदयैः** बृहच्चेतोभिः । **अपरैः** कैश्चिदपि **विधृतं** निजभुजाभ्यां धारितम् । **अन्यैः** कैश्चिदपि पुरुषैः चान्यत् **दत्तम्** । किं कृत्वा ? । **विजित्य** । **यथा**शब्द इवार्थे वर्तते । जगत् कमिव ? । **तृणम्** इव । यथा तृणमनायासेन दीयते तथा जगद्विजित्य दत्तम् । **हि** निश्चितम् । **इह** अस्मिञ्जीवलोके । **अन्ये धीराश्चतुर्दश भुवनानि भुञ्जते** ( ते ) । तदा स्वल्पस्वाम्ये कोऽयं गर्वः ॥ २४ ॥

अथ निःस्पृहाणामधिकारमाह—

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ २५ ॥

हे **नरेन्द्र** ! **त्वं राजा** वर्तसे । **वयमपि उपासितगुरुप्रज्ञाभिमानोन्नताः** वर्तामहे । हे राजेन्द्र ! **त्वं विभवैः ख्यातः** । **नो** अस्माकं **यशांसि** महत्त्वानि **कवयः** कवीश्वराः **दिक्षु प्रतन्वन्ति** दशस्वपि दिशासु विस्तारयन्ति । हे **मानद** ! मानं द्यतीति मानदः । दा 'दोऽवखण्डने' धातुः । दो संध्यक्षराणामकारस्य विकरणे दोनइ दा । हे मानद मानखण्डन ! आव-

१ घ. नृणां । २ ई. छ. ज. °पुरः स्वाम्ये ।

योरुभयोरपि अन्तरं नातिदूरम् । हे राजेन्द्र! यदि चेत् त्वं अस्मासु पराङ्मुखोऽसि अनादरोऽसि तदा वयमपि एकान्ततो निःस्पृहा वर्तामहे । त्वय्यनादराः त्वयि विषये अनादराः ॥ २५ ॥

राज्ञां गर्वतिरस्कारमुद्दिश्याह कविः—

अभुक्तायां[1] यस्यां क्षणमपि न यातं नृपशतैर्  
भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ।  
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो  
विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ २६ ॥

जडाः मूर्खाः विषादे कर्तव्ये प्रत्युत सम्मुखं मुदं विदधति । कथम्? । क्षितिभुजां राज्ञां तस्याः भुवः पृथिव्याः लाभे क इव बहुमानः । यस्यां पृथिव्यां अभुक्तायां सत्यां नृपशतैः नरेन्द्रसहस्रैः क्षणमपि न यातं न गतम् । [ कथंभूताः जडाः? । ] तदंशस्याप्यंशे तस्याः पृथिव्याः विभागस्यापि विभागे तदवयवलेशे तस्य अंशस्यापि लेशे पतयः स्वामिनः ॥२६॥

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुस्[2]  
स्वं स्वीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते ।  
ते दद्युर्ददतेऽथ वा न किमपि क्षुद्रा दरिद्रा भृशं  
धिग् धिक् तान् पुरुषाधमान् धनकणं वाञ्छन्ति तेभ्योऽपि ये ॥२७॥

तान् पुरुषाधमान् धिग् धिक् । ये अधुना तेभ्योऽपि धनकणं वाञ्छन्ति । कथम्? । अयं मृत्पिण्डः पृथ्वीवलयं सर्वोऽपि जलरेखया वलयितः स न तु अणुः स्वल्प (ह. शल्य ?) प्रमाणः । तु पुन स एव मृत्पिण्ड राज्ञां गणैर्भुज्यते । किं कृत्वा? । संयुगशतैः संग्रामाङ्गणशतैः स्वीकृत्य अङ्गीकृत्य ( हं. छ. वशीकृत्य )[3] । ते क्षुद्राः दरिद्रा राजान भृशं अत्यर्थं किमपि दद्युः अथवा न ददते । तानेव पुरुषान् धिक् । ये तेभ्योऽपि वाञ्छा कुर्वन्ति ॥ २७ ॥

अथ दुर्भगसेवकस्य वाक्यमाह—

न नटा न विटा न गायना[4] न परद्रोहनिबद्धबुद्धयः ।  
नृपसद्मनि नाम के वयं कुचभारानमिता न योषितः ॥ २८ ॥

नाम इति सम्बोधने । नृपसद्मनि वयं के? । वयं नटाः न नृत्यकृतः ( ख. नृत्यकारकाः ) न । विटाः न उत्तीर्णा, न । न गायनाः । न परद्रोहनिबद्धबुद्धयः परद्रोहे निबद्धाः बुद्धयो येषां ते परद्रोहनिबद्धबुद्धय । वयं योषितोऽपि न । किंविशिष्टाः योषितः? । कुचभारानमिताः कुचभारेण आ समन्ताद्भावेन नमिता कुचभारानमिता, एवंविधा अपि वयं न ॥ २८ ॥

---

१ ज. अभुक्तानां । २ हं. छ. ज. नन्वणुस्. । ३ ग. अंगीकृत्य; छ. ज. त्वंशीकृत्य । ४ ज. गायका ।

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ।
इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखान्
अहो कष्टं सापि प्रतिदिनमधोधः प्रविशति ॥ २९ ॥

पुरा पूर्वं उपशमवतां विद्वत्ता वैदुष्यं क्लेशहतये संसारनिवारणाय आसीत् । असौ विद्वत्ता कालेन गच्छता विषयिणां पुरुषाणां विषयसुखसिद्ध्यै गता । अहो इति खेदे । कष्टं विलोक्यताम् । इदानीं [ तु ] सापि विद्वत्ता प्रतिदिनं दिनं दिनं प्रति अधोधः प्रविशति । [ किं ? ] कृत्वा ? । शास्त्रविमुखान् क्षितितलभुजः प्रेक्ष्य निरीक्ष्य ॥ २९ ॥

साहंकारपुरुषमोद्दिश्याह—

स जातः कोऽप्यासीन्मदनरिपुणो ( ? °णा ) मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलंकारविधये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ३० ॥

स जातः कोऽपि पुरुषः आसीत् । यस्य पुरुषस्य कपालं उच्चैर्यथा भवति मदनरिपुणोर् ( ? °पुणा ) ( ख. °रिपोर् ) महेशस्य ( ? °शेन ) मूर्ध्नि मस्तके अलंकारविधये ( ख. च. °विषये ) विनिहितम् । किं० कपालम् ? । धवलं उज्ज्वलं । अधुना इदानीं कैश्चिन्नमद्भिः ( ई. अनमद्भिः ) नृभिः पुंसां पुरुषाणां कोऽयं अतुलदर्पज्वरभरः । किं० नृभिः ? । प्राणत्राणप्रवणमतिभिः प्राणस्य त्राणं प्राणत्राणं प्राणत्राणे प्रवणा मतिः येषां ते प्राणत्राणप्रवणमतयः तैः । शिवस्य शिर पूजाकारी मृतोऽपि धन्यः । अन्ये राज्यस्मृतोऽपि (?) जीवन्तोऽपि मृताः । शिवभक्त्यभावात् ॥ ३० ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं
शूरस्त्वं वाग्मिदर्पज्वरशमनविधावक्षयं पाटवं नः ।
सेवन्ते त्वां धनान्धा मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्थानमेतत् त्वयि मम सुतरामेव राजन् गतोऽसि ॥३१॥

हे राजन् ! त्वं अर्थानां ईशिषे त्वं समर्थो भवसि । चान्यत् । वयमपि गिरां वाणीनां ईश्महे समर्था: भवाम. । चान्यत् । त्वं यावत् इत्थं अमुना प्रकारेण शूरो नो अस्माकं

१ ई. °नाशौ । २ ई. ज. सा । ३ ख. ग. मदनविजयिनो; घ. मदनजयिनो । ४ ज. विनिहतम् । ५ च. °प्रणय° । ६ ज. °ज्वरमतुल° । ७ ख. घ. मामिह । ८ ख घ. मय्यप्यास्थानं, ग. मानाप्यास्थानं, च. मानप्यास्थानं । ९ ख. घ. गतोऽसि ।

वाग्मिदर्पज्वरशमनविधौ ( ह्. अनुविधौ ) अक्षयं निश्चलं पाटवं वर्तते । हे राजन् ! त्वां बुधाः ( धनान्धाः ? ) सेवन्ते मामपि श्रोतुकामाः श्रोतारः सेवन्ते । किमर्थम् ? । मतिमलहृतये बुद्धिकालुष्यस्फेटनाय । हे राजन् ! ममापि त्वयि विषये एतत् आस्थानं एषः त्वं सुतरां अतिशयेन मां प्रति गतोऽसि आप्तोऽसि । एतावता तव मम किमप्यन्तरं नास्ति ॥ ३१ ॥

आत्मनो गुणागुणविवेचनमाह—

यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित् किंचिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ३२ ॥

अहं यदा यस्मिन् प्रस्तावे [ मदान्धः द्विप इव हस्तीव समभवम् । किं० अहम् ? । किंचिज्ज्ञः किंचिज्जानातीति किंचिज्ज्ञ । यत्तदोर्नित्यसम्बन्ध. । तदा मम मनः इति अवलिप्तं अभवत् । इतीति किम् ? । अहं ( ? ह्. ) सर्वज्ञोऽस्मि । यदा यस्मिन् प्रस्तावे ] बुधजनसकाशात् पण्डितवर्गसमीपात् किंचित् किंचित् अवगतं ज्ञातम् । तदा इति अमुना प्रकारेण मे मम मदो व्यपगतो दूरीभूत । इतीति किम् ? । अहं मूर्खोऽस्मि । मदः क इव ? । ज्वर इव । यथा कस्यापि ज्वरो याति तथा मे मम अहंकारो यात ॥ ३२ ॥

अथ निर्ममतास्वरूपमाह—

अतिक्रान्तः कालो लटभललनाभोगसुभगो
भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणिम् ।
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः
सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ ३३ ॥

हे बाले ! लटभललनाभोगसुभगः कालो अतिक्रान्तो अतिचक्राम संपूर्णीकृतः । लटभाः सलावण्या या ललनास्तासां भोगेन सुभगो मनोज्ञ लटभललनाभोगसुभगः । इह अस्मिन् मर्त्यलोके संसारसरणिं सुचिरं भ्रमन्तः श्रान्ताः स्मः । इदानीं स्वःसिन्धोः स्वर्गगङ्गायाः तटभुवि कच्छस्थलीषु शिव शिव शिवेति प्रतनुमः विस्तारयामः । कथंभूता वयं ? । सुतारैः फूत्कारैः समाक्रन्दनगिरः । रे बाले त्वं क्वासि ? । तव सम्मुखं न विलोकयाम. ॥ ३३ ॥

माने म्लायिनि खण्डिते च वसुनि व्यर्थं प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।

१ ख. ग. गज । २ ख. घ. ललित । ३ ज. °सुलभो । ४ ग. छ. व्यर्थे । ५ ग. °शनियां° ।

युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ ३४ ॥

सुधियां पुरुषाणां केवलं एतदेव युक्तम् । यज्जह्नुकन्यापयःपूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे क्वचिन्निवासः । कोऽर्थः—जह्नुकन्यायाः गङ्गायाः पयसा पूताः पवित्रा ये ग्रावाणः तेषां योऽसौ गिरीन्द्रः पर्वतः तस्य या कन्दरस्य [ विवरस्य ] दरी गुफा (? °हा) तस्याः कुञ्जः जह्नुकन्यापयःपूतग्रावगिरीन्द्रकन्दरदरीकुञ्जः, तस्मिन् । तत्र निवासो वरम् । क्व सति ? । माने म्लायिनि सति । चान्यत् । वसुनि खण्डिते सति । चान्यत् । अर्थिनि याचके व्यर्थे प्रयाते सति । चान्यत् क्व सति ? । क्षीणे बन्धुजने सति । पुनः क्व सति ? । परिजने गते सति । पुनः क्व सति ? । शनैः शनैः यौवने नष्टे सति । तदा वनवास एव रुचिरः ॥ ३४ ॥

परेषां चेतांसि प्रतिदिवसमाराध्य बहु हा[1]
प्रसादं किं नेतुं विशसि[2] हृदय क्लेशकलितम्[3] ।
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे
विमुक्तः[4] (? क्ते) संकल्पः (? °ल्पात्) किमभिलषितं पुष्यति न ते ॥३५॥

हा इति खेदे । त्वं हृदय ! बहु प्रसादं किं नेतुं ग्रहीतुं विशसि ( ख. दिशसि ) । किं कृत्वा ? । परेषां अपरेषां चेतांसि प्रतिदिवसं दिनस [ दिवसं ] प्रति आराध्य । किं० प्रसादं ? । क्लेशकलितं ( °लं ) कष्टमलिनम् । हे हृदय ! त्वयि अन्तर्मध्ये प्रसन्ने सति [ किम् ] अभिलषितं वाञ्छितं ते तव [ न ] पुष्यति । किं० त्वयि ? । स्वयमुदितचिन्तामणिगुणे । [ पुनः ] किं विशिष्टः ( ? °ष्टे ) त्वम् ( त्वयि ? ) ? । विमुक्तः ( ? क्ते ) संकल्पः ( ? °ल्पात् ) ( घ. विमुक्तेः मोक्षस्य संकल्पः ) ॥ ३५ ॥

* अनावर्ती कालो व्रजति स वृथा तत्र[5] गणितं
दशास्तास्ताः सोढा व्यसनशतसंपातविधुराः ।
कियद् वाचक्षामः[6] किमिव बत नात्मन्युपकृतं[7]
वयं यावत् तावत् पुनरपि तदेव व्यवसितम् ॥ ३६ ॥

[ स कालो व्रजति । अस्माभि तत्र गणितम् । ] किं० कालः ? । अनावर्ती अपुनरागमी न पुनः आगमोऽस्यास्तीति असावपुनरागमी । तदस्यास्तीति इन्प्रत्ययः । अस्माभिस्तास्ताः दशाः सोढाः । तत् कियद् वा आचक्षामः । किं० दशाः ? । व्यसनशतसंपातविधुराः व्यस-

---

१ ख. घ. बहुधा; ज. बहुधा हा । २ ख. दिशसि । ३ ई. छ. कलिलम् । ४ घ. विमुक्तेः । * ई. कोशे प्रथमपादोऽवशिष्टः । ५ घ. न गुणितं; छ. निगणितं । ६ ख. घा °चक्ष्यामः; घ. वाचक्षामः । ७ ख. घ. °न्युपकृतं ।

नानां कष्टानां शतं व्यसनशतं तस्य संपातेन विधुरः व्यसनशतसंपातविधुरः। बत इति खेदे। आत्मनि किमिव न अपकृतं विरूपं न कृतम्²। यावद् वयं तावत् पुनरपि तदेव व्यवसितं उद्यमितम्। येन कर्मणा दुःखितैर्भूयेत ॥ ३६ ॥

[ पुनरप्यभिमान(² नि)ता प्राह–

न भिक्षा दुष्प्रापा पथि पथि मठारामसरितः
फलैः संपूर्णा भूर्विटपिमृगचर्मापि वसनम्।
सुखे वा दुःखे वा सदृशपरिपाकः खलु तदा
त्रिणेत्रं कस्त्यक्त्वा धनलवमदान्धं प्रणमति ॥ ३६A ॥

कोऽभिमानी पुमान् [ तदा ] धनलवमदान्धं प्रणमति। किं कृत्वा²। त्रिणेत्रं महेशं त्यक्त्वा। तदा इति कथम्²। भिक्षा दुष्प्रापा न। पथि पथि मठारामसरितः। भूः पृथ्वी फलैः संपूर्णा। अपि पुन विटपिमृगचर्म वसनं विटपिभूर्जत्वक् (²ग्) मृगचर्मणी वस्त्रं। सुखे वा दुःखे वा सदृशपरिपाकः सदृक् कर्मण फल, खलु निश्चितम्। तदा धनलवमदान्धं क. प्रणमति।

[ हं. छ. ज. कोशेष्वेव अयं श्लोको दृश्यते। च. कोशे तु टीकामात्रम् अपूर्णम्। ]

स्थितिः¹ पुण्येऽरण्ये सह परिचयो हन्त हरिणैः
फलैर्मेध्या वृत्तिः² प्रतिनदि च तल्पानि दृषदः।
इतीयं सामग्री भवति हरभक्तिं स्पृहयतां³
वनं वा गेहं वा सदृशमुपशान्तैकमनसाम् ॥ ३७ ॥

उपशान्तैकमनसां उपशान्तं [ अत एव ] एकं मनो येषां ते उपशान्तैकमनस, तेषां यतीनां धनं वा गेहं वा सदृशम्। इति अमुना प्रकारेण इयं सामग्री हरभक्तिं स्पृहयतां भवति। इतीति किम्?। पुण्ये पवित्रेऽरण्ये स्थित (स्थिति)। पुन इतीति किम्?। हन्त इत्यागमे। हरिणैः (ख. हिरणैः; हं. च. हिरण्यै; छ. हरणै) सह परिचय। चान्यत् फलैर्मेध्या पवित्रा वृत्तिः (हं. ख. च. मेधा बुद्धिवृद्धि)। प्राणवृत्तिरित्यर्थ। चान्यत्। प्रतिनदि नदीं नदीं प्रति दृषदस्तल्पानि ॥ ३७ ॥

अमीषां प्राणानां तुलितबिशिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम्।
यदाढ्यानामग्रे⁴ द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३८ ॥

---

१ ज. स्थितः पुण्यारण्ये। २ हं. ख. च. मेधा वृत्तिः। ३ ज. स्पृहयति। ४ यद्न्धानां।

अस्माभिरमीषां प्राणानां कृते किं न व्यवसितमुद्यमितम् ? । [ किंभूतानां प्राणानां ? । तुलितनिशिनीपत्रपयसाम् तुलितं निशिनीपत्रपयो यैस्ते तुलितनिशिनीपत्रपयसस्तेषाम् । ] किं० अस्माभिः ? । विगलितविवेकैः विगलितो विवेको येषां ते विगलितविवेकाः, तैः । विवेक-रहितैरित्यर्थः । यदाढ्यानामग्रे धनवतां पुरः वीतव्रीडैर्गतलज्जैः अस्माभिः ( ई. च. छ. अस-स्माभिः ) निजगुणकथापातकमपि कृतम् । निजगुणानां कथापातकम् निजगुणकथापातकम् । किं० आढ्यानां ? । द्रविणमदनिःसंज्ञमनसाम् । कोऽर्थः ? । द्रविणमदेन धनमदेन निःसंज्ञं मनो येषां ते द्रविणमदनिःसंज्ञमनसस्तेषां । धनमदान्धेतना [ नाम् ] इत्यर्थः ॥ ३८ ॥

भ्रातः कष्टमहो महान् स नृपतिः सामन्तचक्रं च तत्
पार्श्वे तस्य च सापि राजपरिषत् ताश्चन्द्रबिम्बाननाः ।
उद्रिक्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात् स्मृतिपदं कालाय तस्मै नमः ॥ ३९ ॥

तस्मै कालाय नमः । अहो इत्याश्चर्ये । हे भ्रातः ! कष्टं विलोक्यताम् । किं० कष्टम् ? । स एव महान् नृपतिः । चान्यत् । तत् सामन्तचक्रम् । चान्यत् । तस्य पार्श्वे सापि राजपरिषत् सापि राजसभा । चान्यत् । ताश्चन्द्रबिम्बाननाः नार्यः । चान्यत् । स राजपुत्र-निवहः नृपकुमारसमूहः । किं० राजपुत्रनिवहः ? । उद्रिक्तः सदर्पः । चान्यत् । ते बन्दिनः ते भट्टाः । चान्यत् । ताः कथाः । यस्य वशात् एतत् सर्वं पूर्वोक्तं स्मृतिपदं अगात् कथाशेषं जगाम । कालाय तस्मै नमः । यतः कालेन क्षीयते सर्वम् ॥ ३९ ॥

पुनः कालमुद्दिश्याह—

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।
इदानीमेते स्मः प्रतिदिवसमासन्नपतनाद्
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ४० ॥

येभ्यः समानवयोभ्यः समं [ वयं ] जाताः खलु निश्चितम् ते चिरपरिगता एव मृता एव । वयं यैः समं संवृद्धास्तेऽपि स्मृतिविषयतां गमिताः । स्मृतेर्विषयता स्मृतिविषयता तां [ गमिताः ] । स्मारिताः सन्त्वक्षेणोगोचरमायान्तीत्यर्थः । इदानीमेते वयं स्मः सावशेषाः । किं० वयम् ? । सिकतिलनदीतीरतरुभिः तुल्यावस्थां गताः । सिकतिला चे(श्चा)त्कटाधिका नदी सिकतिलनदी तस्यास्तीरतरवः सिकतिलनदीतीरतरवस्तैः । एतावता सिकतिलनदीतीरतरवः पतनशीला

. १ ख. सापि च । २ ज. उद्रिक्तः । ३ ग. सर्वे । ४ ख. घ. श्रुतिपदं । ५ ई. च. समासन्न । ६ ग.° पतना । ७ ख. सिकतात° ।

भवन्तीत्यर्थः । सुकुमारभूमित्वात् यादृशास्ते तदवस्थादृगवस्थां वयं प्राप्ताः स्मः । कस्मात् ? । प्रतिदिवसं दिवसं [ दिवसं ] प्रति आसन्नपतनात् आसन्नकालमरणात् । एतावता संसारस्यावस्था ईदृशी वर्तते ॥ ४० ॥

यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र चान्ते न चैकः ।
इत्थं चेमौ रजनिदिवसौ दोलयन् द्वाविवाक्षौ
कालः काल्या सह बहुकलः क्रीडति प्राणिसारैः ॥ ४१ ॥

कालो मृत्यु काल्या सह कालराज्या सह प्राणिसारैः सत्त्व ( हं. ख. च. °त्वि ) काष्ठशुन्के क्रीडति रमते ( हं. च. छ. °ति ) । किं० काल ? । बहुकलः बह्वी कला यस्यासौ बहुकलः । किं कुर्वन् ? । इमौ द्वौ [ रजनिदिवसौ इत्थं अमुना प्रकारेण अक्षाविव पाशकाविव दोलयन् प्रक्षिपन् प्रेरयन् । युक्तोऽयमर्थः । अन्योऽपि यो द्यूतकृत् क्रीडां कुरुते तस्य अक्षौ पाशकौ विलोक्येते । अत्र काल द्यूत ( ? द्यूतकृत् ) ।] रजनिदिवसावेव पाशकौ । इत्थं कथम् ? । यत्र क्वचिदपि गृहे अनेकः [ अथ ] तत्र एकस्तिष्ठति । अपि पुन यत्र एकः तत्र [ तदनु ] बहवः । चान्यत् । यत्र बहवस्तत्र [ अन्ते ] एकोऽपि न । कालक्रीडाया इत्थं स्वभावत. ( ? वः ) ॥४१॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान् दारानुत परिचरामः सविनयम् ।
पिबामः शास्त्रौघान् द्रुतविविधकाव्यामृतरसान्
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ४२ ॥

जने लोके न विद्मः वयं किं कुर्मः । किमिति सन्देहे । सुरनदीं गङ्गां निवसामः आश्रयं कुर्मः । किं० वयं ? । तपस्यन्तः सन्तः तप. कुर्वन्तः सन्त । उत अथवा दारान् कलत्राणि ( हं. च. छ. कलत्रान् ) परिचरामः परिचर्यां कुर्म. । किं० दारान् ? । गुणोदारान् गुणोत्कटान् । [ कथं परिचराम ? । सविनयं । ] उत अथवा शास्त्रौघान् पिबामः शृण्मः । किं० शास्त्रौघान् ? । द्रुतविविधकाव्यामृतरसान् द्रुतः श्रुत [ स्रुतः ? ] विविधकाव्यानां अमृतरसो येषु ते द्रुतविविधकाव्यामृतरसा. तान् । [ इत्थं ] चेतस्यस्माक संशयो वरीवर्ति । एतेषु पदार्थेषु किं कुर्म ? । यो गुणाधिकस्तं सेवयाम. ॥ ४२ ॥

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।

---

१ ख. घ. यत्रानेका; च. यात्रानेकः । २ ज. कल्या । ३ ग. प्राणसारैः; च. प्राणिसारे । ४ ख. घ. किमपि । ५ घ. न वसामः । ६ ख. घ. विविधतम° । ७ ख. घ. °नरभसा ।

किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
सं[1]प्राप्यन्ते जर[2]ठहरिणाः शृङ्गकण्डूविनोद[3]म् ॥ ४३ ॥

किमिति संभावनायाम् । मम तैः सुदिवसैर्भाव्यम् । यत्र दिवसेषु जरठहरिणाः प्रौढमृगाः निर्विशङ्काः सन्तः [ निर्गता विशेषेण शङ्का येषां ते ] शृङ्गकण्डूविनोदं विषाणघर्षणलीलां संप्राप्यन्ते । किंभूतस्य मम ? । हिमगिरिशिलाबद्धपद्मासनस्य हिमगिरिशिलायां बद्धं पद्मासनं येन [ सः ] हिमगिरिशिलाबद्धपद्मासनस्तस्य । क्व ? । गङ्गातीरे । पुनः किं० मम ? । योगनिद्रां गतस्य योगस्य निद्रा योगनिद्रा [ तां ], योगनिद्राया (निद्रा) प्राप्तस्य । केन ? । ब्रह्मध्यानाभ्यसनविधिना ब्रह्मध्यानस्य अभ्यसनं ब्रह्मध्यानाभ्यसनं, तस्य यो विधिः [ सः ] ब्रह्मध्यानाभ्यसनविधिः, तेन । एवंविधेन निर्मलभावेन सुखसाध्यसिद्ध( साध्या )सिद्धिः ॥ ४३ ॥

स्फुरत्स्फा[4]रज्योत्स्नाधवलिततले क्वापि पुलिने
सुखा[5]सीनः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोद्वि[6]ग्नः शिव शिव शिवे[7]त्यार्तव[8]चसा
कदा [9]स्यामानन्दोद्गतब[10]हुल[11]बाष्पप्लुतदृशौ[12] ॥ ४४ ॥

अहं शिव शिव शिवेत्यार्तवचसा कदा स्याम् ? । किं० अहं ? । भवाभोगोद्विग्नः भवस्य संसारस्याभोगस्तत्र उद्विग्नः । किंभूतेन वचसा ? । आनन्दोद्गतबहुलबाष्पप्लुतदृशा [ आनन्देन उद्गतानि बहुलानि बाष्पाणि तैः प्लुते दृशौ यस्मिन् तत् ] आनन्दोद्गतबहुलबाष्पप्लुतदृक् तेन । क्व ? । द्युसरितः गङ्गायाः क्वापि निर्जने ( इं. निर्व्यंजने ) पुलिने । [ किं० पुलिने ? । स्फुरत्स्फारज्योत्स्नाधवलिततले स्फुरन्ती दीप्यमाना स्फारा प्रचुरा या ज्योत्स्ना तया धवलितं शुभ्रीकृतं तलं यस्य तत् तस्मिन् । किं भूतोऽहम् ? । ] सुखासीनः । कासु ? । रजनीषु । किं० रजनीषु ? । शान्तध्वनिषु उपशान्तशब्दासु । एवंविधाः वासराः भाग्यहीनानां ( छ. संभोगहीनानां ) न भवेयुः ॥ ४४ ॥

महादेवो देवः सरिदपि च सै[13]वामरसरिद्
गुहा गृहागारं वसनमपि ता एव ह[14]रितः ।
सुहृद् वा कालोऽयं व्र[15]तमिदमदैन्यव्रतमिदं
कियद् वा वक्ष्यामो व[16]टविटप एवास्तु दयिता ॥ ४५ ॥

---

१ ख. ग. संप्राप्यन्ते । २ इं. ग. च. छ. ज. जठर° । ३ ज. °विनोदाः । ४ छ. ज. स्फारा । ५ ख. ग. घ. सुखासीनाः । ६ ख. ग. °गोद्विग्नाः । ७ घ. च °त्यार्त° । ८ ग. ज. °वचसः । ९ ग. स्यामो हर्षोद्गल° । १० ख. ग. °बहल° । ११ छ. ज. °बाष्पा° । १२ °दृशः । १३ ख. सैवासुर° । १४ ज. सरितः । १५ ख. व्रततिमिदं । १६ ख. घ. नट°

देवो महादेवो नान्य ( छ. मान्य ) । सरिदपि नद्यपि सैव अमरसरित् सुरनदी । आगारं गृह गुहा एव । वसनमपि वस्त्रमपि हरितः दिशः । वा अथ वा सुहृत् मित्र अयं कालः । इदं व्रतं अदैन्यव्रतं इदं । [ वा अथवा ] कियत् वक्ष्यामः । दयिता कलत्र वटविटप एव अस्तु ॥ ४५ ॥

शिरः शार्वं स्वर्गात् पशुपतिशिरस्तः क्षितिधरं
गिरीन्द्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधोऽधो गाङ्गेयं पदमुपगता स्तोकमथ वा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ४६ ॥

शार्वं म ( मा ? )हेश शिरः स्वर्गादधो वर्तते । पशुपतिशिरस्तः महेश्वरमस्तकात् क्षितिधरः (?१) [ अधो आनीहि ] । उत्तुङ्गाद्गिरीन्द्राद् वर्तते ( ? ) अवनिं अधो जानीहि । अवनेश्चापि जलधिं समुद्र अधो जानीहि । स्तोकं गाङ्गेयं पदं अधोऽधः उपगतम् । अथवा विवेकभ्रष्टानां प्राणिना विनिपातः शतमुखो भवति ॥ ४६ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारँगता विशुद्धमनसो नन्दन्तु योगीश्वराः ॥ ४७ ॥

नामेति सम्बोधने । आशा नदी अस्ति । कि० आशा नदी ? । मनोरथजला मनोरथा एव जलानि यस्या सा । पुन कि० आशा नदी ? । तृष्णातरङ्गाकुला । अन्यापि या नदी भवति सा तरङ्गाकुला भवति । इय नदी तृष्णातरङ्गाकुला । पुन कि० आशा नदी ? । रागग्राहवती स्नेहग्राहयुक्ता । युक्तम् । अन्यापि या नदी [ सा ] ग्राहजलचरजीववती भवति । पुन कि० आशा नदी ? । वितर्कविहगा वितर्को [ विरुद्धो ] विचार, त एव विहगा पक्षिणो यस्या सा । नद्यामपि विहगा भवन्ति । अस्यामपि तथैव । पुन कि० आशा नदी ? । धैर्यद्रुमध्वंसिनी धैर्य द्रुमस्य ध्वंसोऽस्यास्तीति धैर्यद्रुमध्वंसिनी । अन्यापि नदी द्रुमध्वंसिनी भवति । पुन कि० आशा नदी ? । मोहावर्तसुदुस्तरा मोहस्य आवर्तो मोहावर्तस्तेन सुदुस्तरा मोहावर्तसुदुस्तरा । अन्यापि नदी सुदुस्तरा भवति । पुन कि० आशा नदी ? । अतिगहना अतीव गहन यस्या सा अतिगहना । अन्यापि नदी अतिगहना भवति । पुन कि० आशा नदी ? । प्रोत्तुङ्गचिन्तातटी प्रोत्तुङ्ग चिन्ता एव तटी यस्या सा । अन्यापि नदी तटिनी प्रोच्यते । तस्या नद्या पारगता योगीश्वरा नन्दन्तु सर्वोत्कर्षेण वर्तन्ताम् । किंभूता योगीश्वरा ? । विशुद्धमनसो निर्मलमानसा ॥ ४७ ॥

---

१ ख, ग घ सार्वं । २ ख ग महीध्रात् । ३ ख ग घ जलधि । ४ ख ग. घ. अधो गङ्गा सेय । ५ ह. मागेय । ६ ह च छ उपगत । ७ ह पारिगता । ८ ग. नन्दन्ति ।

आसंसारं त्रिभुवनमिदं चिन्वतां तात! तादृङ्
नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ।
योऽयं धत्ते विषयकरिणीगाढरूढाभिमानः
क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ४८ ॥

हे तात! तादृक् कोऽपि पुमान् अस्माकं नयनपदवीं नेत्रगोचरं वा अथवा श्रोत्रवर्त्म (ख. श्रोत्रमार्गे) श्रवणमार्गेण (? र्गं) नागतः। यः अयं क्षीबस्यान्तःकरणकरिणः संयमालानलीलां धत्ते। किं० अयं?। विषयकरिणीगाढरूढाभिमानः विषय एव करिणी हस्तिनी तस्यां गाढरूढो (?ढः) अत्यन्तमारूढो(?ढः) अभिमानो यस्य सः। किंलक्षणानां अस्माकम्?। आसंसारं यावत् इदं त्रिभुवनम् चिन्वतां संचयतां वर्धयताम् (?)। यो जितेन्द्रियः जेता स विरलः ॥४८॥

ये वर्धन्ते धनपतिपुरः प्रार्थनादुःखदीर्घा
ये चाज्ञत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ ४९ ॥

अहं तेषां वासराणां अन्तःस्फुरितहसितं ध्यानच्छेदे स्मरेयं चिन्तयामि। ये वासराः धनपतिपुरो धनाढ्यानां पुरस्तात् प्रार्थनादुःखदीर्घा वर्धन्ते । प्रार्थनादुःखेन दीर्घाः प्रार्थनादुःखदीर्घाः। चान्यत्। ये वासराः विषयाक्षेपपर्यस्तबुद्धेः प्राणिनः अज्ञत्वं अज्ञानत्वं दधति। विषयस्याक्षेपः आदरः विषयाक्षेपः विषयाक्षेपेण विषयादरेण पर्यस्ता निराकृता बुद्धिर्यस्य स विषयाक्षेपपर्यस्तबुद्धिः तस्य। किं० अहं?। शिखरिकुहरग्रावशय्यानिषण्णः (ङ. निषिक्तः) शिखरिणः कुहरः शिखरिकुहरः, शिखरिकुहरस्य पर्वतविवरस्य ग्रावशय्याया निषण्णः निविष्टः ॥ ४९ ॥

सांप्रतं निर्वेदतायाः स्वरूपमाह—

विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न संपादिता ।
आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ ५० ॥

अहो अयं कालोऽस्माभिः परपिण्डलोलुपतया काकैरिव प्रेरितः। परपिण्डस्य परग्रासस्य लोलुपता परपिण्डलोलुपता तया। कथम्?। अस्माभिः विद्या नाधिगता न पठिता। किं०

१ छ. वर्तन्ते। २ ख. ग. घ. ° दुःखमाजो। ३ ख. ग. घ. चाल्पत्वं; ङ. ज. चान्तत्वं। ४ ख. घ. स्फुरति। ५ ङ. ख. च. नाधिगताः। ६ ख. °विरहिता। ७ ग. शुश्रूषा च। ८ घ. संपादिताः। ९ घ. प्रेषितः।

विधा ? । कलङ्करहिता दोषरहिता । निस्तुषा इत्यर्थः । चान्यत् । वित्तं नोपार्जितम् । अपि पुनः समाहितेन मनसा निश्चलचित्तेन पित्रोः मातृजनकयोः शुश्रूषापि न संपादिता न विहिता न कृता । चान्यत् स्वप्नेऽपि युवतयो नालिंगिताः । किं० युवतयः ? । आलोलायत-लोचनाः आ समन्ताद् भावेन लोलानि चपलानि आयतानि दीर्घाणि लोचनानि यासां ता आलोलायतलोचनाः । तस्मात् कारणात् मुधैव जन्म गमितम् ॥ ५० ॥

> वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः
> स्मरन्तः संसारे विगुणपरिणामावधिगतीः ।
> वयं पुण्येऽरण्ये परिणति( ? त )शरच्चन्द्रकिरणैस्
> त्रियामा नेष्यामो हरचरणचित्तैकशरणाः ॥ ५१ ॥

वयं पुण्ये पवित्रेऽरण्ये कदा त्रियामा ( ख. °मा ) नेष्यामः । कैः समम् ? । परिणति( ? त) शरच्चन्द्रकिरणैः समम् । कोऽर्थः ? । परिणता ( हं. °णिताः ) परिणामं प्राप्ता ये शरत्कालीनाः चन्द्रकिरणाः [ते] परिणतशरच्चन्द्रकिरणास्तैः । क सति ? । सर्वस्वे सर्वधने वितीर्णे सति । किं० वयम् ? । तरुणकरुणापूर्णहृदयाः तरुणकरुणया पूर्णं हृदयं येषां ते तरुणकरुणापूर्णहृदयाः । वयं किं कुर्वन्तः ? । संसारे विगुणपरिणामावधिगतीः स्मरन्तः । विगुणपरिणामाः अवधयो [ यासां तास्तथाविधाः ] गतयः विगुणपरिणामावधिगतयस्ताः । पुनः किं० वयम् ? । हरचरणचित्तैकशरणाः हरचरणावेव चित्तस्य एकं शरणं येषां ते हरचरणचित्तैकशरणाः ॥ ५१ ॥

> वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
> सम इह परितोषो निर्विशेषोऽवशेषः ।
> स तु भवतु दरिद्रो यस्य तृष्णा विशाला
> मनसि तु परितुष्टे कोऽर्थवान् को दरिद्रः ॥ ५२ ॥

हे ! राजेन्द्र ! इह अस्मिन् संसारे वयं वल्कलैः कृत्वा परितुष्टाः । चान्यत् । त्वं लक्ष्म्या परितुष्टः । एतावता सन्तोषस्य तत्त्वमेकमेव । इह अस्मिन्नर्थे परितोषः सम एव । किं० परितोषः ? । निर्विशेषावशेषः निर्विशेष एव अवशेषोऽवसानं यस्य स निर्विशेषावशेषः । विशेषश्चायम्—तु पुनः स दरिद्रो भवतु यस्य पुरुषस्य विशाला विस्तीर्णा तृष्णा । अनन्ततृष्णस्य पुंसः दारिद्र (°दारिद्र्यं) क्वापि न यातीत्यागमः । तु पुनः मनसि परितुष्टे सति कोऽर्थवान् को दरिद्रः । अपि तु न कोऽपि ॥ ५२ ॥

---

१ हं. च. परिणिति°; छ. परिण्वित° । २ ज. त्रियामा । ३ ख. घ. हरि° । ४ हं. ग. च. ज. °शेषो नि° । ५ ग. ज. च ।

यदेतत् स्वाच्छन्द्यं विहरणमकार्पण्यमशनं
सहार्यैः संवासः श्रुतमुपशमैकव्रतफलम् ।
मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृशन्
न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ५३ ॥

तदहं न जाने । एषा कस्य उदारस्य तपसः परिणतिः परिणामो वर्तते । एषा का परिणतिः ? । यदेतत् स्वाच्छन्द्यं विहरणम् । अन्यच्च अकार्पण्यं अशनं प्रबलं भोजनम् । अन्यच्च सहार्यैः ( साहाय्यैः–सहायैः ) संवासः परिकरेण सह निवासः । [ अन्यच्च ] उपशमैकव्रतफलम् उपशमरसोल्लासितं श्रुतं शास्त्रम् । [ अन्यच्च ] बहिरपि बाह्यप्रदेशेऽपि मनो मन्दस्पन्दं कल्पनारहितम् । अहं किं कुर्वन् ? । चिरस्य चिररात्राय [ अपि ] विमृशन् विमर्शनां कुर्वन् । चिरकालं चिन्तयन्नित्यर्थः ॥ ५३ ॥

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्ष्यमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशादशकमपमलं तल्पमस्वल्पमुर्वी ।
येषां निःसङ्गताङ्गीकरणपरिणतिः स्वात्मसंतोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ५४ ॥

धन्यास्त एव ये कर्म निर्मूलयन्ति । किं० धन्याः [२] । संन्यस्तदैन्यव्यतिकरनिकराः संन्यस्तो निराकृतो दैन्यव्यतिकरस्य निकरो यैस्ते संन्यस्तदैन्यव्यतिकरनिकराः । पुनः किं० ते ? । स्वात्मसंतोषिणः स्वात्मन्येव संतोषो येषां ते स्वात्मसंतोषिणः । अन्यच्च । येषां पुरुषाणां निःसङ्गताङ्गीकरणपरिणतिः निःसङ्गतायाः अङ्गीकरणं निःसङ्गताङ्गीकरणं तस्य परिणतिः निःसङ्ग० । येषां पुरुषाणां पात्रं भोजनभाण्डं पाणिः हस्तः ( ख. हं. च. हस्तौ ) । पवित्रं भ्रमणपरिगतं भैक्ष्यं अक्षयं(य्यं) अव्ययं अन्नम् अनघं । वस्त्रं विस्तीर्णं आशादशकं अपमलं निर्मलम् । अस्वल्पं विस्तीर्णं [ तल्पं ] शय्या उर्वी पृथ्वी । एवंविधस्वरूपेण ये संसारपारं गच्छन्ति त एव धन्याः ॥ ५४ ॥

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो
वयं च स्थूलेच्छा महति च पदे बद्धमनसः ।
जरा देहं मृत्युर्हरति सकलं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः ॥ ५५ ॥

१ ध. साहाय्यैः; हं. सहायैः । २ ध. शकलं ।

हे सखे ! जगति रसाया विदुषः पण्डितस्य तपसः अन्यत्र अन्यत् श्रेयः कल्याणं न। कथम् ?। स्वामी अधिपति दुराराध्यः। क्षितिभुजो राजान तुरगचलचित्ताः तुरंगमवत चपलचेतसः । तु(ंच) पुन वयं स्थूलेच्छाः। चान्यत् महति पदे मुक्तिलक्षणे बद्धमनसः। जरा देहं हरति मृत्युः इदं सकलं जीवितं हरति। ततस्तपसा विना श्रेयो न॥ ५५॥

भोगा मेघवितानमध्यविलसत्सौदामिनी[1]चञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद् भङ्गुरम्।
लोला यौवनलालना तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धि[2]सुलभे बुद्धिं विद[3][द्]ध्वं बुधाः ॥ ५६ ॥

हे बुधाः पण्डिता । योगे मनोवचनकायसरोधलक्षणे बुद्धिं विद[द्]ध्वम्। इतरदखिलं तृणतुषप्रायम्। कथं ?। भोगाः पञ्चाक्षा मेघवितानमध्यविलसत्सौदामिनीचञ्चलाः। कोऽर्थः ?। मेघवितानमध्ये विलसन्ती या सौदामिनी विद्युत् तद्वत् चञ्चलाश्चपला। चान्यत्। आयुर्जीवितं वायुविघट्टिताभ्रपटलीलीनाम्बुवत् भङ्गुरम्। वायुना विघट्टिता या अभ्रपटली तत्र लीन यदम्बु पानीय तद्वद् वायुविघट्टिताभ्रपटलीलीनाम्बुवद् भङ्गुरं विनाशशीलम्। तनुभृतां प्राणिना यौवनलालना तारुण्यप्रतिपालना लोला चञ्चला वर्तते। इति आकलय्य इति विचिन्त्य द्रुतं शीघ्र योगे मनो विद[द्]ध्वम्। [किं० योगे ?। धैर्यसमाधिसिद्धिसुलभे (°सुभगे)।] ॥ ५६ ॥

पुण्ये ग्रामे वने वा महति सितपटच्छन्न[4]पालीं कपालीम्
आदाय न्यायगर्भद्विजहुतहुतभुग्धूम[5]धूम्रोपकण्ठम्[6]।
द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी स धन्यो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥५७॥

मानी प्राणी अभिमानी पुमान् क्षुधार्तः स धन्यः (ह. छ. ज. सुधन्य) वरं सुष्ठु। (छ पुन तुल्यकुल्येषु अनुदिनं दीनः न वरम्। तुल्यकुले(°ले)षु भवा तुल्यकुल्याः तेषु) पुन प्राणी) उदरदरीपूरणाय द्वारं द्वार प्रवृत्तो वर। किं कृत्वा ?। महति ग्रामे वा अथवा वने कपालीं खर्पर (छ खर्परीं) आदाय गृहीत्वा। किं० कपालीं ?। सितपटच्छन्नपालीं सितपटेन श्वेतवस्त्रेण छन्ना अच्छादिता पाली यस्या सा सितपटच्छन्नपाली तां। किं० ग्रामे वा वने ?। पुण्ये पवित्रे। किं० द्वारं ?। न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठं न्यायगर्भेण [ह. गर्भितेन] न्यायशास्त्रपठितेन द्विजेन हुतो योऽसौ हुतभुग् वैश्वानर तस्य योऽसौ धूम (°मा) प्रचुरो धूमस्तेन व्याप्त उपकण्ठं यस्य तत् न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ॥ ५७ ॥

---

१ ह. सौदामनी°। २ ख. घ. छ °सुभगे। ३ छ. ददध्वं जना.। ४ ग. छिद्रपालीं। ५ ग. छ. ज. °धूमधूम्रोप°। ६ ख. घ. °कण्ठम्।

चण्डालः[1] किमयं द्विजातिरथ वा शूद्रोऽथ किं तापसः
किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् ।
इत्युत्पन्नविकल्पजल्पमुखरैः संभाव्यमाणा[3] जनैर्
न क्रुद्धाः पथि नैव तुष्टमनसो यास्यन्ति[4] ते योगिनः ॥ ५८ ॥

त (ख. च. अत) एव योगिनो ये पथि मार्गे जनैः एवं संभाव्यमाणाः न क्रुद्धाः यास्यन्ति नैव तुष्टमनसो यास्यन्ति । किं० जनैः ? । इत्यमुना प्रकारेण [ उत्पन्न ] विकल्पजल्पमुखरैः । इतीति किम् ? । अयं किं चण्डालः वा अथवा द्विजो ब्राह्मणः अथवा शूद्रः । अथ किं तापसः । किं वा अथवा योगीश्वरः । किं० योगीश्वरः ? । तत्त्वनिवेशपेशलमतिः तत्त्वनिवेशे पेशला मनोज्ञा मतिर्यस्य असौ । एवंविधा [ये] निर्विकल्पास्त एव धन्याः ॥ ५८ ॥

सखे धन्याः केचित् त्रुटितभवबन्धव्यतिकरा
वनान्ते चित्तान्तर्विषमविषयाशीविषगताः ।
शरच्चन्द्रज्योत्स्ना[5]धवलगगनाभोगसुभगां
नयन्ते[6] ये रात्रिं सुकृतचयचित्तैकशरणाः ॥ ५९ ॥

हे सखे ! हे मित्र ! त एव धन्याः केचित् ये एवं प्रकारेण रात्रिं नयन्ते । किं० ते ? । सुकृतचयचित्तैकशरणाः सुकृतानां चयः समूहः सुकृतचयः, सुकृतचयः चित्ते एकं शरणं येषां ते सुकृतचयचित्तैकशरणाः । पुनः किं० ते ? । त्रुटितभवबन्धव्यतिकराः त्रुटितो भवबन्धस्य व्यतिकरो येषां ते त्रुटितभवबन्धव्यतिकराः । पुन. किं० ते ? । वनान्ते वनमध्ये चित्तान्तर्विषमविषयाशीविषगताः चित्तान्त. मानसमध्ये विषमो योऽसौ विषय एवाशीविषः दृष्टिविषोरगः [स] गतो येषां ते चित्तान्तर्विषयविषयाशीविषगताः । वा विषमविषयाशीर्विगलिताः पाठः । किं० रात्रिम् ? । शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगाम् शरच्चन्द्रस्य ज्योत्स्ना शरच्चन्द्रज्योत्स्ना [तया] शरत्कालीनचन्द्रमसः कान्त्या धवलेन गगनाभोगेन नभोविस्तारेण सुभगा मनोज्ञा सा शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगा ताम् ॥ ५९ ॥

एतस्माद्[7] विरमेन्द्रियार्थगहनादायासकादाश्रयाच्
छ्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ।
शान्तं भावमुपैहि संत्यज निजां कल्लोललोलां गतिं
मा भूयो भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना ॥ ६० ॥

---

१ ह. च. चाण्डालः । २ ज. वा । ३ ह. °माना; ख. घ. °मानो । ४ ख. ग. घ. यान्ति स्वयं । ५ ह. 'ज्योत्स्ना' । ६ ख. घ. नयन्त्येते । ७ छ. कोने श्लोकोऽयं स्थलान्तरे दृश्यते ।

हे चेतः ! हे आत्मन् ! अधुना प्रसीद प्रसादं कुरु। एतस्मादिन्द्रियार्थगहनाद् विरम। किं० इन्द्रियार्थगहनात् ?। आयासकादाश्रयात् कुत्सितः आश्रयः कदाश्रयः, कदाश्रयस्य भावः कादाश्रयः, आयासेन कादाश्रयः आयासकादाश्रयः तस्मात्। क्षणात् शान्तं भावमुपैहि। किं० शान्तं भावम् ?। श्रेयोमार्गं मोक्षमार्गम्। पुनः किं० शान्तं भावम् ?। अशेषदुःखशमनव्यापारदक्षम् अशेषाणि यानि दुःखानि तेषां शमनव्यापारे दक्षः अशेषदुःखशमनव्यापारदक्षस्तम्। हे चेतः ! निजां कल्लोललोलां गतिं संत्यज्य परिहर। भूयः पुनरपि भङ्गुरां विनश्वरां भवरतिं मा भज सेवय। एभिर्लक्षणैः संसारस्य वृद्धिरेव स्यात्। तत् तस्मात् कारणात् तानि चेष्टितानि त्यज ॥ ६० ॥

पुण्यैर्मूलफलैः[1] प्रिये प्रणयिनि प्रीतिं कुरुष्वाधुना
भूशय्यानववल्कलैरकरणैरुत्तिष्ठ यामो वनम्।
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
चित्त[2]व्याधि( ध्य )विवेक[3]विह्वलगिरां नामापि न श्रूयते ॥ ६१ ॥

हे प्रणयिनि ! हे प्रिये ! उत्तिष्ठ उत्तिष्ठ। वनं यामः। यत्र ईश्वराणां धनवतां नामापि न श्रूयते। किं० ईश्वराणां ?। क्षुद्राणां तुच्छानाम्। अन्यच्च अविवेकमूढमनसां अविवेकेन मूढं मनो येषां तेषाम्। पुनः किं० ईश्वराणां ?। चित्तव्याधि(ध्य)विवेकविह्वलगिरां चित्तव्याधीनां अविवेकेन ( छ. विवेकेन ) विह्वला गीर्वाणी येषां ते चित्तव्याधि(ध्य)विवेकविह्वलगिरः तेषाम्। हे प्रिये ! [ अधुना सम्प्रति ] पुण्यैः पवित्रैः मूलफलैः प्रीतिं कुरुष्व। अन्यच्च। भूशय्यानववल्कलैः प्रीतिं कुरुष्व। किं० भूशय्यानववल्कलैः ?। अकरणैः क्रियत इति करणं न करणं अकरणं तैः अकरणैः करणक्रियारहितैरित्यर्थः ॥ ६१ ॥

मोहं मार्जयतामुपार्जय रतिं चन्द्रार्ध[4]चूडामणौ
चेतः स्वर्गतरङ्गिणीतटभुवा[5]मासङ्गमङ्गीकुरु।
को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु[6] च स्त्रीषु च
ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु कः[7](नः) प्रत्ययः ॥ ६२ ॥

रे चेतः ! मोहं मार्जयतां दूरीक्रिय(०कुरु)ताम्। रे प्राणिन् ! चन्द्रार्ध(च. चन्द्रार्क) चूडामणौ रतिं सतोषं उपार्जय। रे चेत ! स्वर्गतरङ्गिणीतटभुवां (०जा) स्वर्गतरङ्गिणी गङ्गा [ तस्याः तटभुवा तीरभूमीना ] आसङ्गं संगतिं अङ्गीकुरु। नः अस्माकं वा अथवा को वीचिषु कल्लोलेषु प्रत्ययो विश्वासः। चान्यत्। जलबुद्बुदेषु वर्षावारिसम्पुटेषु कः प्रत्ययः। चान्यत्।

१ ख. घ. पुण्यै°। २ ग. ज. चित्त°। ३ ख. घ. °विकार°। ४ घ. चन्द्रार्क°। ५ इं. घ. तटभुजाम्। ६ घ. तटिल्लेखा°। ७ ग. घ. नः; इं. न।

तडिल्लेखासु सौदामिनीपु कः प्रत्ययः । चान्यत् । स्त्रीपु कः प्रत्ययः । चान्यत् । ज्वालाग्रेषु कः प्रत्ययः । चान्यत् । पन्नगेपु कः प्रत्ययः । चान्यत् । सरिद्वेगेषु तटिनीप्रवाहेषु कः प्रत्ययः । यथा एतेषु स्थानेषु ( हं. स्थानकेषु ) नः अस्माकं प्रत्ययो नास्ति तथा जीवितेषु ॥ ६२ ॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६३ ॥

रे चेतः ! यदि एवमस्ति तदा भवरसास्वादने लम्पटत्वं कुरु । एवं किम् ? । यदि तवाग्रे स्फीतं प्रचुरं गीतं भवति । अन्यच्च पार्श्वतो दाक्षिणात्याः दक्षिणदेशीयाः सरसकवयः भवन्ति । अन्यच्च पृष्ठे चामरग्राहिणीनां सुन्दरीणां [लीला] वलयरणितं शब्दं (ब्दो) भवति । यदि एवंविधं सौख्यं भवति तदा संसारस्य ममतां कुरु । रे चेतः ! चेदेवं नो तदा सहसा निर्विकल्पे समाधौ प्रविश प्रवेशं कुरु ॥ ६३ ॥

विरमत बुधा योषित्सङ्गात् सुखात् क्षणभङ्गुरात्
कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथ वा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६४ ॥

हे बुधाः ! योषित्सङ्गात् सुखात् विरमत विरतिं भजत । कि० सुखात् ? । क्षणभङ्गुरात् । करुणामैत्रीप्रज्ञावधूजनसंगमं कुरुत विदधत । करुणा च मैत्री च प्रज्ञा च करुणामैत्रीप्रज्ञा(:) सैव(ता एव)वधूजन (ना )स्तस्य(तेषां)संगमः करुणामैत्रीप्रज्ञावधूजनसंगमः तम् । खलु निश्चितम् । नरके घनस्तनमण्डलं अथवा श्रोणीबिम्बं नितम्बबिम्बं न शरणम् । कि० स्तनमण्डलम् ? । हाराक्रान्तं हारविभूषितम् । पुनः किं० श्रोणीबिम्बम् ? । रणन्मणिमेखलम् रणन्ती शब्दन्ती मणिमेखला यस्मिन् तत् रणन्मणिमेखलम् ॥ ६४ ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णाश्रो(स्रो)तोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्या सर्वशास्त्रेष्वनुपहतविधिश्रेयसामेष पन्थाः ॥ ६५ ॥

---

१ एतच्छ्लोकानन्तरं हं. कोशे 'कार्कश्यं स्तनयोः' इति श्लोको दृश्यते । 'ओघाक्षिप-कोऽयं' इति टीकायाम् । तदनन्तरं 'पना हसन्ति च' । २ हं. छ. ज. घनं स्तन' ।

हे आत्मन् ! अनुपहतविधिश्रेयसां पुरुषाणां एष पन्थाः । न उपहतः न निराकृतः अनुपहतः, तेन अनुपहतेन विधिना मार्गेण श्रेयो येषां ते अनुपहतविधिश्रेयसः तेषां । मुक्तानामित्यर्थः । तेषां एष मार्गः । क एष मार्गः ? । प्राणाघातान्निवृत्तिः जीवहिंसाविरमः । परधनहरणे परद्रव्यापहारे संयमः । 'यम उपरमे' सं-पूर्वः । संयमनं संयमः परिहारः । पुनः किम् ? । सत्यवाक्यम् । पुनः किम् ? । काले शक्त्या प्रदानम् । पुनः किम् ? । परेषां युवतिजनकथामूकभावः । पुनः किम् ? । तृष्णाथो(स्रो)तोविभङ्गः लोभप्रवाहविच्छेदः । चान्यत् । गुरुषु विनयः । पुनः किम् ? । सर्वभूतानुकम्पा सर्वप्राणिदया । किंभूता प्राणिदया ? । सर्वशास्त्रेषु सामान्या समानस्य भावः सामान्य [तदस्ति यस्यां सा] सामान्या समानभावा इत्यर्थः । मोक्षमार्गिणां एष मार्गः ॥ ६५ ॥

मातर्लक्ष्मि भजस्व कं चिदपरं मत्काङ्क्षिणी मा स्म भूर्
भोगेभ्यः स्पृहयालवो न हि वयं का निःस्पृहाणामसि ।
सद्यःस्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ ६६ ॥

हे मातर्लक्ष्मि ! कं चिदपरं भजस्व । मत्काङ्क्षिणी मा स्म भूः मा भूयाः । वयं भोगेभ्यो न स्पृहयालवः नेच्छवः । निःस्पृहाणां निरीहाणां त्वं कासि । वयं भिक्षासक्तुभिरेव संप्रति इदानीं वृत्तिं दिनगमनिकां समीहामहे वाञ्छामहे(स्मः)। क सति ? । सद्यस्तत्कालं स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते सति । यद्येवमस्माकं स्थितिस्तदा वयं त्वया किं कुर्मः ? ॥६६॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ।
किं[2] जा तमधुना येन यूयं यूयं वयं वयम् ॥ ६७ ॥

हे मित्र ! आवयोरिति मतिरासीत् इयत्कालम् । इतीति किम् ? । यूयं वयं, वयं यूयम् । अधुना इदानीं किं जातम् । येन यूयं यूयं वयं वयम् ॥ ६७ ॥

बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्यन्ये वयमु[3]परतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६८ ॥

हे बाले हे सुन्दरि ! लावकीर्णं लीलामुकुलितम् । अमी मन्थरा दृष्टिपाताः अस्मासु किं क्षिप्यन्ते । विरम विरम । एषः ते तव श्रमो व्यर्थो निरर्थकः । संप्रति वयं अन्ये ते न भवामः । अस्माकं बाल्यमुपरतम् (ह. ०मपरतं गतम्) । अस्माकमास्था वनान्ते । कथम् ? । क्षीणो मोहः । जगज्जालं विश्वसमूहं तृणमिव आलोकयामः ॥ ६८ ॥

---

१ ख. घ. प्रीतिरा° । २ ग. किमभूदधुना; ह कोशप्रान्ते 'इदानीमर्थसंपात्तः' पाठोस्ति । ३ ह. °मपरतं ।

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरकुसुमबाणव्यतिकर-
ज्वरज्वाला शान्ता तदपि न वराकी विरमति ॥ ६९ ॥

[ इयं बाला मां प्रति चक्षुर्नेत्रं अनवरतं निरन्तरं किं क्षिपति । ] कथंभूतं नेत्रम् ? । इन्दीवरदलप्रभाचोरं इन्दीवरस्य कमलस्य दलं इन्दीवरदलं तस्य प्रभा चोरयतीति इन्दीवरदलप्रभाचोरम् । अनया किमभिप्रेतं किं वाञ्छितम् । अस्माकं मोहो गतः । स्मरकुसुमबाणव्यतिकरज्वरज्वाला शान्ता । वराकी तदपि न विरमति ॥ ६९ ॥

रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये ।
किं तूद्भ्रान्तपतत्पतंगपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ ७० ॥

सन्तः सत्पुरुषा वनान्तं गताः । किमिति संभावनायाम् । तेषां वसतये निवासाय हर्म्यतलं रम्यं नाभूत् । [ किमिति संभावनायाम् । वा अथवा श्रव्यं श्रवणार्हं गेयादिकं गीतादि नाभूत् । अपि तु बभूव । वा अथवा किमिति संभावनायाम् । प्राणसमासमागमसुखं प्राणसमा प्राणतुल्या प्रिया तस्याः समागम सङ्ग तस्य सुखं प्राणसमासमागमसुखं । अधिकप्रीतये अतिप्रसन्नतायै नाभूत् । अपि तु अभूत् । ] तथापि सन्तो वनान्तं गताः वनं सेवयामासुः । [ तु पुनः किं किमर्थं वनं सेवयामासु ? । उद्भ्रान्तपतत्पतंगपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलं उद्भ्रान्तः चक्षुर्लोभेन भ्रमं प्राप्तः योऽसौ पतत्पतंगः तस्य पवनेन व्यालोला चञ्चला या दीपाङ्कुरस छाया कान्तिस्तद्वच्चञ्चलं ] सकलं जीवलोकं आकलय्य विचिन्त्य हृदये ज्ञात्वा इत्यर्थः ॥ ७० ॥

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलेभ्यश्च शाखाः ।
वीक्ष्यन्ते यन्मुखानि प्रसभमुपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि ॥ ७१ ॥

---

१ घ. ए. ज. °चौरं । २ अ °मनमा । ई. कोशे प्रथमपादो लभ्यते । ३ ई. वसंतसमये । ४ ज. श्राव्यं । ५ ख. घ. प्राणसमं । ६ ख. घ. नैवाधिकं । ७ ख. घ. सततं । ८ घ. ज. निर्झरा । ९ ई. वल्कलिभ्यश्च । १० घ. °वित्तस्मय° । ११ ज. °विष° । —

यत् तु खलानां दुर्जनानां मुखानि वीक्ष्यन्ते विलोक्यन्ते। यत्तदोर्नित्यसंबन्धः। तत् किं कन्दरेभ्यः कन्दाः प्रलयमुपगताः क्षयं जग्मुः। वा अथवा गिरिभ्यः पर्वतेभ्यः निर्झराः प्रलयमुपगताः। वा अथवा वल्कलेभ्यस्तरुभ्यः शाखाः प्रध्वस्ताः विनाशमुपजग्मुः। किं० शाखाः?। सरसफलभृतः सरसानि फलानि बिभ्रतीति सरसफलभृतः। किं० खलानाम्?। प्रसभं यथा भवति (तथा) उपगतप्रश्रयाणां प्रोल्लसद्गर्वाणाम्। किं० मुखानि?। दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि दुःखेन उपात्तं उपार्जितं यदल्पं वित्तं तस्य स्मयवशपवनेन आ समन्तात्भावेन नर्तिता भ्रूलता यैः तानि दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि ॥ ७१ ॥

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि।
स्थानानि किं हिमवतः प्रलयं गतानि
यत् सावमानपरपिण्डरता मनुष्याः ॥ ७२ ॥

मनुष्याः यत् सावमानपरपिण्डरताः वर्तन्ते। तत् किं हिमवतः स्थानानि प्रलयं गतानि। किं० हिमवतः स्थानानि?। गङ्गातरङ्गकणशीकरशीतलानि गङ्गायास्तरङ्गाः गङ्गातरङ्गाः, तेषां कणशीकरैः शीतलानि गङ्गातरङ्गकणशीकरशीतलानि। पुनः किं० हिमवतः स्थानानि? विद्याधराध्युषितचारुशिलातलानि विद्याधरैरध्युषितानि सेवितानि अधिष्ठितानि चारुशिलातलानि येषां तानि। एवंविधानि स्थानानि चेत् न स्युस्तदा परतिरस्कारपिण्डरता नराः भवेयुः। एतावता परावमानात् तान्येव स्थानानि सेवितानि वरम् ॥ ७२ ॥

यदा मेरुः श्रीमान् निपतति युगान्ताग्निनिहतः
समुद्राः शुष्यन्ति प्रचुरनिकरग्राहनिलयाः।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्ता करिकलभकर्णाग्रचपले ॥ ७३ ॥

यदा श्रीमान् मेरुः युगान्ताग्निनिहतो (ह. °हितो) निपतति। समुद्राः शुष्यन्ति (ह. पुष्यन्ति)। किं० समुद्राः?। प्रचुरनिकरग्राहनिलयाः प्रचुराश्च ते निकराः समूहाः [ते सन्ति येषां तेषां] ग्राहाणां जलचरजीवानां निलयाः गृहाणि येषु ते प्रचुरनिकरग्राहनिलयाः। अपि पुनः धरा वसुधरा अन्तं गच्छति विलयं व्रजति। किं० धरा?। धरणिधरपादैः धृतापि अवलम्बितापि। तदा शरीरे का वार्ता। किं० शरीरे?। करिकलभकर्णाग्रचपले करिकलभानां कर्णाग्रवत् चपलं करिकलभकर्णाग्रचपलं तस्मिन् ॥ ७३ ॥

एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः।
कदा शंभो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ७४ ॥

१ ज. सदा। २ छ. °निहितः। ३ घ. छ. धृताः। ४ ख. शंभुर्भवि°।

[हे प्रभो] हे शंभो! अहं एतादृशः कदा भविष्यामि। किं० अहम्?। एकाकी अद्वितीयः। पुनः किं० अहम्?। निस्पृहः। पुनः किं० अहम्?। शान्तः। पुनः किं० अहम्?। पाणिपात्रः पाणिरेव पात्रं भाण्डं यस्य स पाणिपात्रः। पुनः किं० अहम्?। दिगम्बरः दिश एव अम्बरं यस्य असौ दिगम्बरः। पुनः किं० अहम्?। कर्मनिर्मूलनक्षमः कर्मणां निर्मूलनं कर्मनिर्मूलनं कर्मनिर्मूलने क्षमः कर्मनिर्मूलनक्षमः॥ ७४॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम्।
सन्मानिताः[1] प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्॥ ७५॥

श्रियो लक्ष्म्यः प्राप्ताः ततः किम्। किं० श्रियः?। सकलकामदुघाः समस्तमनोरथदोग्ध्र्यः। विद्विषतां शिरसि मस्तके पदं दत्तं (ख. न्यस्तं) ततः किम्। प्रणयिनः स्नेहिनः विभवैर्धनैः सन्मानिताः ततः किम्। तनुभृतां प्राणिनां [तनुभिः] शरीरैः कल्पं कल्पान्तं यावत् स्थितं प्राणितं ततः किम्। एतावता संसारस्य निर्ममतैव वरम्॥ ७५॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमार्थनीयम्[2]॥ ७६॥

अतः परं वैराग्यमस्ति। तत् किम्?। भक्तिर्भवे महेशे। अन्यच्च हृदिस्थं मरणजन्मभयम्। अन्यच्च बन्धुषु स्नेहो न। अन्यच्च मन्मथजाः कामोद्भवा विकारा न। अन्यच्च वनान्ताः विजनाः जनरहिताः। किं० वनान्ताः?। संसर्गदोषरहिताः संसर्गस्य दोषः संसर्गदोषः तेन रहिताः संसर्गदोषरहिताः। अतोऽपि वैराग्यं किमपि नास्ति। किं० वैराग्यम्?। परमार्थनीयं परमवरप्रयुक्तम् (द. °युतम्)॥ ७६॥

जीर्णा कन्था ततः किं सितममलपटं[3] पट्टसूत्रं ततः किं
एका[4] भार्या ततः किं हयकरिसुगणैरावृतो[5] वा ततः किम्।
भक्तं भुक्तं ततः किं कदशनमथ वा वासरान्ते ततः किं
व्यक्तं ज्योतिर्न चान्तर्मथितभवभयं वैभवं वा ततः किम्॥७७॥

१ घ. संमानिताः। २ ग. परमर्थं°। ३ ज. °परं पट्टकूलं। ४ च. त्वेका; ज. एषा। ५ च. करितुरगगणैरा°। ६ ग. यान्तं। द. श्लोकोऽयं न दृश्यते। ग. जीर्णेति सुगमम्। घ. अस्य टीका न।

तस्मादनन्तमजरं परमं विकाशि
तद् ब्रह्म वाञ्छत जना यदि चेतनस्थाः ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ७८ ॥

हे जनाः ! यदि यूय चेतनस्थाः तत् तस्मात् ब्रह्म वाञ्छत । किं० ब्रह्म ? । अनन्तं अन्तरहित अजर जरावर्जित । पुन किं० ब्रह्म ? । परमं विकाशि । यस्य परब्रह्मण इमे भवनाधिपत्यभोगादयः अनुषङ्गिणो भवन्ति अनुयायिनो वर्तन्ते । किं० भवनाधिपत्य भोगादय ? । कृपणलोकमताः तुच्छजनाविभ्रमा ॥ ७८ ॥

पातालमाविशसि यासि नभो विलङ्घ्य
दिग्मण्डलं भ्रमसि मानसचापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मनीनं
तद् ब्रह्म न स्मरसि निर्वृतिमेषि येन ॥ ७९ ॥

रे मूढ ! पातालमाविशसि । अन्यच्च नभः आकाश विलङ्घ्य यासि । अन्यच्च दिग्मण्डल भ्रमसि । केन ? । मानसचापलेन मानसस्य चापल मानसचापल तेन । जातु कदाचित् भ्रान्त्यापि तद् ब्रह्म कथं न स्मरसि । येन ब्रह्मणा निर्वृतिम् ( मातृकासु 'निर्वृतिं' ) एषि मुक्तिं प्राप्नोषि । किं० ब्रह्म ? । आत्मनीनं । कोऽर्थः ? । आत्मने हित आत्मनीनम् । पुन किं० ब्रह्म ? । विमलं निर्मलम् ॥ ७९ ॥

रात्रिः सैव पुनः [redacted] एव दिवसो मत्वा बुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ।
व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना
संसारेण कदर्थिता वयमहो मोहान्न लज्जामहे ॥ ८० ॥

अहो इति दुःखे । अमुना एवंविधेन ससारेण कदर्थिताः । कस्मात् ? । मोहात् मौढ्यात् । कथ ? । न लज्जामहे । कै ? । व्यापारैः । किं० व्यापारै ? । पुनरुक्तभुक्तविषयैः पुनरुक्तानि पुनर्विहितानि यानि भुक्तानि भोजनानि अन्यच्च विषया तै । बुधाः पण्डिता जन्तवः प्राणिन उद्यमिनः उद्यमवन्तो धावन्ति । किं० जन्तव ? । तथैव पुन पुन निभृत-प्रारब्धतत्तत्क्रियाः वार वार निभृता आरब्धा तत्तत्क्रिया यैस्ते । किं० कृत्वा ? । ता रात्रिं मत्वा पुन तथैव दिवस मत्वा ज्ञात्वा । यत प्रोक्तम्—

१ ख विकासि, ग. विशोक । २ ग. तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पै. । ३ ख. घ. भुवना° । ४ ग °मता । ५ छ. आत्मनीय ।

'पुनरपि रजनी पुनरपि दिवसः पुनरपि मासः पुनरपि वर्षम् ।
पुनरपि वृद्धः पुनरपि बालः पुनरपि याति समेति च कालः ॥' १ ॥

एवंविधं संसारस्य स्वरूपं मत्वा तस्मात् संसारात् विरक्ता [बुधा] एव भवन्ति न जडाः ॥ ८० ॥

महीशय्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ८१ ॥

शान्तो मुनिः सुखं यथा भवति [तथा] शेते । यस्य मुनेः महीशय्या शय्या पृथ्वीस्यापः शयनम् । यस्य मुनेर्विपुलमुपधानं गण्डूषः [?] भुजलता भुजवल्ली । चान्यत वितानं चन्द्रोदयः आकाशम् । अयमनुकूलः शीतलः [अनिलः] पवनः व्यजनं तालवृन्तः । चान्यत् चन्द्रः स्फुरद्दीपः । चान्यत् विरतिवनितासङ्गं प्रति उदितः । मुनिः क इव ? । नृप [illegible] यथा नृपः । महीशय्या पृथ्वीशायिनी शय्या भवति । अन्यच्च विपुलोपधानो भवति विस्तीर्णगण्डूषो (ख. °गण्डपो; घ. °गण्डशो) भवति । चान्यत् । आकाशोपरि (हं. °शं प्रति) मस्तकोपरि वितानं भवति । चान्यत् व्यजनानिलेन वीजितो भवति । अन्यच्च स्फुरद्दीपो भवति । अन्यच्च वनितासङ्गं प्रति उदितो भवति । कि० मुनिः ? । चान्यत् नृपः ? । अतनुभूतिः । अतन्वी भूतिर्विभूतिर्यस्य [सः] । पक्षे लक्ष्मीः ॥ ८१ ॥

त्रैलोक्याधिपतित्वमेव विरसं यस्मिन् महाशासने
तल्लब्ध्वासनवस्त्रमानघटने भोगे रतिं मा कृथाः ।
भोगः कोऽपि स एक एव परमो नित्योदितो जृम्भते
यत्स्वादाद् विरसा भवन्ति विषयास्त्रैलोक्यराज्यादयः ॥ ८२ ॥

हे आत्मन् ! तत् परब्रह्म लब्ध्वा (हं. °ब्ध्वा) भोगे रतिं मा कृथाः । यस्मिन् परब्रह्मणि एव निश्चयेन त्रैलोक्याधिपतित्वं विरसं वर्तते । कि० परब्रह्मणि ? । महाशासने प्रौढमते । कि० भोगे ? । आसनवस्त्रमानघटने । आसनं सिंहासनं सुखासनादि वस्त्राणि चीनांशुकपट्टकूलादि (? °दीनि) मानं महत्त्वाभिमानादि तेषां घटनं आसनवस्त्रमानघटनं तस्मिन् । एवंविधे भोगे का रतिः । कोऽपि स भोग एक एव परमो ब्रह्म नित्योदितः सन् उज्जृम्भते ।

---

१ ख. घ. मही शय्या रम्या; ग. च. मही रम्या शय्या । २ ग. शान्तं । ३ हं. तल्लब्ध्वा । ४ ज. एव । ५ ख. नित्योदितो । ६ हं. °त्योज्जृंभते । [illegible] ख. घ. यत्स्वादात्; ग. यिसचास् ।

यत्प्रसादात् यस्य ब्रह्मणो स्मात् त्रैलोक्यराज्यादयो विषया विरसा भवन्ति मोक्षादाय (इ ^थि) कत्वात् ॥ ८२ ॥

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवभारदुःखरचनाविध्वंसकालानलं[2]
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ८३ ॥

वेदैः किं, स्मृतिभिः किं, पुराणपठनैः किं, शास्त्रैः किम् । कि० शास्त्रै । महाविस्तरैः महान् विस्तरो येषां ते महाविस्तरास्तै । [अन्यच्च] कर्मक्रियाविभ्रमैः किम् । कि० कर्मक्रियाविभ्रमै ? । स्वर्गग्रामकुटीनिवासफलदैः स्वर्गग्रामस्य कुटी स्वर्गग्रामकुटी तस्या निवासफल ददतीति स्वर्गग्रामकुटीनिवासफलदास्तै । एकं स्वात्मानन्दपदप्रवेशकलनं मुक्त्वा (छ मध्यं)। स्वकीयोऽसौ आत्मा स्वात्मा तस्य यत् आनन्दपद स्वात्मानन्दपद तस्य प्रवेशकलन स्वात्मानन्दपदप्रवेशकलन । [कि० तत् ? । भवभारदुःखरचनाविध्वंसकालानल ।] शेषाः क्रिया वणिग्वृत्तयः वणिगाचरणम् ॥ ८३ ॥

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीर्
अर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः[3] ।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत् प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत[4] भवभयाम्भोधिपारं तरीतुम् ॥ ८४ ॥

हे उत्तमा ! ब्रह्मणि परब्रह्मणि आसक्तचित्ता भवत (क च भवतु, ग ग घ भवन्तु) यूय । किं कर्तुम् ? । भवभयाम्भोधिपारं तरीतुं । भवभयाम्भोधे पार भवभयाम्भोधिपारस्तम् । शेष समस्तमस्थिरम् । किं किम् ? । आयुः कल्लोललोलं समुद्रकल्लोलवच्चपलम् । यौवनश्री कतिपयदिवसस्थायिनी कतिपयदिवसान् स्थातु शीलमस्या सा कतिपयदिवसस्थायिनी। अर्थाः संकल्पकल्पाः संकल्पतुल्या । भोगपूरा (छ पूगा) घनसमयतडिद्विभ्रमाः घनसमयतडिद्वत् विभ्रमो येषा ते घनसमयतडिद्विभ्रमा । प्रियाभिः प्रणीतं यत् कण्ठश्लेषोपगूढं तदपि न चिरं । तस्मिन् कारणे परब्रह्म एव शाश्वतम् ॥ ८४ ॥

ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ।
शफरीस्फुरितेनाब्धेः[5] क्षुब्धता जातु जायते ॥ ८५ ॥

---

१ ग भवयघ ध मुनमार° । २ ■ °कालानिल । ३ छ भोगपूगा । ४ ख. ग भवतु । ५ घ शफरी° ।

मनस्विनः जितेंद्रियस्य ( ह. यतेंद्रियस्य ) ब्रह्माण्डमण्डलीमात्रं किं लोभाय जायते । अपि तु न । ब्रह्माण्डस्य मण्डली ब्रह्माण्डमण्डली ब्रह्माण्डमण्डली एव मात्रा यस्य तत् ब्रह्माण्डमण्डलीमात्रम् । अब्धेः समुद्रस्य शफरीस्फुरितेन मत्स्यिकावेल्लनेन ( ख. वेल्लितेन ) जातु कदाचित् क्षुब्धता ( क. क्षुद्रता ) क्षोभना ( छ. क्षोभमाना ) जायते । अपि तु न । तथा मनस्विनः पुरुषस्य ब्रह्माण्डं लोभाय न जायते ॥ ८५ ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म तनुते ॥ ८६ ॥

यदा यस्मिन् प्रस्तावे अज्ञानमासीत् तदा इदं अशेषं जगदपि मया नारीमयं दृष्टम् । किं लक्षणमज्ञानम्[१] । स्मरतिमिरसंस्कारजनितं स्मरस्य कन्दर्पस्य यत् तिमिरमन्धकारं तस्य संस्कारेण पूर्वभवोद्भवपरिणामेन जनितम् । इदानीं साम्प्रतं अस्माकं समीभूता दृष्टिः समतापरिणामेनालङ्कृता चेत् त्रिभुवनमपि ब्रह्म तनुते परब्रह्मरूपं विस्तारयति । किं० अस्माकम्[२] । पटुतरविवेकाञ्जनजुषां प्रकृष्टं पटु पटुतरं पटुतरो योऽसौ विवेकः पटुतरविवेकः [ स एव ] अञ्जनं पटुतरविवेकाञ्जनं तेन पटुतरविवेकाञ्जन( [१]ञ्जनेन)जुषः ( [२]जुष्) सेवनं येषां ते पटुतरविवेकाञ्जनजुषस्तेषाम् । अथ यथास्थितं संसारस्य स्वरूपं पश्याम ॥ ८६ ॥

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यः साधुसमागमः शमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित् पुनः ॥ ८७ ॥

चन्द्रमरीचयो रम्याः । वनान्तस्थली रम्या । किं० स्थली[१] । तृणवती शाद्वलतृणयुता । साधुसमागमः रम्यः । शमसुखं रम्यम् । काव्येषु कथा रम्याः ( ह. रम्या ) । अन्यच्च प्रियायाः मुखं रम्यम् । किं० मुखम्[२] । कोपोपाहितबाष्पबिन्दुतरलं कोपोपाहितं कोपाटोपनिवेशितं यद् बाष्पबिन्दु तेन तरलं चञ्चलं कोपोपाहितबाष्पबिन्दुतरलम् । पुनः अनित्यतां उपगते संप्राप्ते चित्ते सर्वं रम्यं न किंचित् ॥ ८७ ॥

॥ [१]भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा
दानादानविरक्तमार्गनिरतः कश्चित् तपस्वी स्थितः ।

१ ख. समसुख । २ ह. कथा ।

रथ्याक्षीणविशीर्णजीर्णवसनैः संप्राप्तकन्थासखो
निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ८८ ॥

एवंविध तपस्वी कश्चिद् विरल स्थितो वर्तते । कीदृश ? । भिक्षाशी भिक्षाभोजन । पुन कि० ? । जनमध्यसङ्गरहितः । पुन कि० तपस्वी ? । सदा सर्वदा स्वायत्तचेष्टः स्वाधीनमानसपरिणाम । पुन कीदृश ? । दानादानविरक्तमार्गनिरतः दानं च आदान च दानादाने दानादानयोर्विरक्तमार्ग [ तत्र निरत सावधान । ] पुन कीदृश ? । रथ्याक्षीणविशीर्णजीर्णवसनैः संप्राप्तकन्थासखः रथ्याया क्षीणानि विशीर्णानि ( ह. विस्तीर्णानि ) जीर्णानि वसनानि रथ्याक्षीणविशीर्णजीर्णवसनानि तै कृत्वा संप्राप्ता कन्था सखी पत्नी सहायिनी येन स । पुनः कीदृश ? । निर्मानः मोमानी गर्वरहित प्रसन्न ( च. छ. आत्मज्ञ ) । पुन कि० ? । निरहंकृतिः निरहंकारः । पुन कि० ? । शमसुखाभोगैकबद्धस्पृहः शमस्य सुखं शमसुखं [ तस्य आभोग अनुभव तत्र ] शमसुखाभोगे विस्तारे एका बद्धा स्पृहा येन स ॥ ८८ ॥

मातर् मेदिनि तात मारुत सखे तेजः सुबन्धो जल
भ्रातर् व्योम निबद्ध एष भवतामन्त्यप्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परब्रह्मणि ॥ ८९ ॥

हे मातः ! हे मेदिनि ! हे तात मारुत ! हे सखे तेजः ! हे सुबन्धो जल ! (ख. ग. °ज्ज्वल) हे भ्रातर् व्योम ! भवतां पञ्चतत्त्वाना एषः अन्त्यप्रणामाञ्जलिः निबद्धोऽस्ति । तथाविधेय यथा परब्रह्मणि लीये लीनो भवामि । कि० अहम् ? । युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मलज्ञानापास्तसमस्तमोहमहिमा युष्माकं सङ्ग [ युष्मत्सङ्गस्तस्य वशस्तेन ] युष्मत्सङ्गवशेन उपजातो योऽसौ सुकृतोद्रेक तस्य स्फुरन्निर्मलज्ञानेन अपास्ता (? °स्तो ) निराकृता (? °त ) समस्तमोहमहिमा येन स युष्म० ॥ ८९ ॥

यावत् स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
आदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ९० ॥

१ च. °शमसुखो । २ ख. ग. घ. सुबन्धोज्ज्वल । ३ ग. अन्त्यः । ४ ग. परे ब्रह्मणि । ५ घ. स्वास्थ्यमिदं । ६ च. शरीरमपज । ७ ग. प्रोदीप्ते, ह. ज उद्दीप्ते । ८ ख. घ. भुवने । ९ ख. घ. न. ह. च. हि । १० क. ख. ग. घ. खनने ।

विदुषा पण्डितेन आत्मश्रेयसि स्वमोक्षोपाये (हं. ख. च. सुमोक्षाय) तावदेव महान् प्रयत्नः कार्यः। [यावदिदं कलेवरगृहं शरीरमन्दिरं स्वस्थं वर्तते समाधानपरायणं वर्तते। चान्यत्। यावत् जरा दूरे वर्तते। चान्यत् यावत् इन्द्रियशक्तिः अप्रतिहता वर्तते। चान्यत्। यावदायुषः क्षयो नास्ति। तावदेव स्वहिते प्रयत्नः कार्यः।] [तु पुनः] भवने [आदीप्ते] (च. उद्दीपिते) सति प्रदीप्ते सति। (ख. च. हि निश्चितम्)। कूप (हं. छ. प्रकूप) खनने कीदृशः प्रत्युद्यमः। ननु प्रदीपने प्रदीप्ते सति कूपं खनितुं न शक्यते ॥ ९०॥

नाभ्यस्ता भुवि वादिवृन्ददमनी[1] विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं[2] न नीतं यशः[3]।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो[4] शून्यालये दीपवत् ॥ ९१ ॥

भुवि पृथिव्यां विद्या न अभ्यस्ता। किं० विद्या?। वादिवृन्ददमनी। पुनः किं० विद्या?। विनीतोचिता विनयवतः पुरुषस्य योग्या। खड्गाग्रैः कृपाणधाराभिः यशो नाकं स्वर्गलोकं प्रति न नीतम्। किं० खड्गाग्रैः?। करिकुम्भपीठदलनैः करिणां कुम्भपीठं करिकुम्भपीठं तद्दलने शीलं येषां ते करिकुम्भपीठदलनास्तैः। चान्यत्। चन्द्रोदये कान्ताकोमलपल्लवाधररसो न पीतः। अहो इति खेदे। तारुण्यं यौवनं निष्फलमेव गतम्। किंवत्?। शून्यालये दीपवत् ॥ ९१ ॥

ज्ञानं सतां मानमदादिनाशनं केषां चिदेतन्मदमानकारणम्।
स्थानं विविक्तं[5] यमिनां विमुक्तये कामातुराणामतिकामकारणम् ॥९२

सतां सत्पुरुषाणां ज्ञानं मानमदादिनाशनं भवति। केषां चिदधमानां एतत् ज्ञानं मदमानकारणं भवति। अमुमेवार्थं कविर्दृष्टान्तेन द्रढयति। यमिनां मुनीनां विविक्तं स्थानं एकान्तप्रदेशः विमुक्तये भवति संसारोच्छेदनाय स्यात्। कामातुराणां पुरुषाणां तदेव विविक्तं निर्जनं (हं. निर्व्यजनं) जनरहितं [स्थानं] अतिकामकारणं भवति कामविकासाय स्यात् ॥९२॥

जीर्णा एव मनोरथाः स्वहृदये[6] यातं[7] जरा[8] यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता[9] गुणज्ञैर्विना।
किं युक्तं सहसाभ्युपैति बलवान् कालः[10] कृतान्तोऽक्षमी
ह्याज्ञातं[11] त्रिपुरान्तकाङ्घ्रियुगलं[12] मुक्त्वाऽस्ति[13] नान्या गतिः ॥९३

१ ज. °दन्तिदमनी। २ ज. °दन्तदलनैः। ३ ख. घ. नीतं न नाकं। ४ हं. क. ग. निःफल°। ५ हं. विमुक्तं। ६ ग. सुहृदये। ७ ख. घ. ज. जातं; छ. य्यातं। ८ क. जरा। ९ ख. घ. जाता। १० घ. कामः। ११ ख. ग. च. ह्याज्ञानं; घ. ह्यज्ञानं। १२ ज. युगुलं। १३ ग. मुक्तास्ति।

मनोरथाः स्वहृदये जीर्णाः एव । यौवनं [ जरां यातं ] जराव्याप्तम् । हन्तेति खेदे । चान्यत् । गुणा [ अङ्गेषु ] वन्ध्यफलतां गुणज्ञैर्विना जाताः । अक्षमी बलवान् कालो यम. सहसा अभ्युपैति । किं युक्तम् [१] । हि निश्चितम् । आज्ञातम् आ समन्ताद्भावेन ज्ञात । [ किम् आज्ञातम् [२] । ] त्रिपुरान्तकाङ्घ्रियुगलं मुक्त्वा अन्या गतिर्नास्ति । किं० काल [३] । कृतान्तः कृतोऽन्तो येन स कृतान्त ॥ ९३ ॥

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादुसुरभि
क्षुधार्तः सञ्शालीन् कवलयति[1] शाकादिवलितान् ।
प्रदीप्ते रागाग्नौ सुदृढतरमाश्लिष्यति[2] वधूं
प्रतीकारो व्याधेः सुखमिव[3] विपर्यस्यति जनः ॥ ९४ ॥

प्राणी सलिलं पानीय पिबति । क सति [१] । आस्ये वदने तृषा शुष्यति सति । किं० सलिलम् [२] । स्वादुसुरभि । प्राणी क्षुधार्तः सन् शालीन् कवलयति अत्ति । किं० शालीन् [३] । शाकादिवलितान् । प्राणी रागाग्नौ प्रदीप्ते सति सुदृढतर यथा भवति वधूं भार्या आश्लिष्यति आलिङ्गते । जनः प्राणी व्याधेः प्रतीकारः उपचार [ योऽस्ति त ] सुखमिव विपर्यस्यति विपर्यासं करोति ॥ ९४ ॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां
ध्येये ध्यानं निवेश्य[4] क्षितिधरकुहरग्रावपर्यङ्कमूले[5] ।
आत्मारामः फलाशी[6] गुरुवचनरतस्त्वत्प्रसादात् स्मरारे
दुःखं[7] मोक्ष्ये कदाहं[8] तव चरणरतो ध्यानमार्गैकप्रश्नः[9] ॥ ९५ ॥

हे स्मरारे ! कदा दुःखान्मोक्ष्ये । किं कृत्वा [१] । गाङ्गैः पयोभिः ( ह [illegible] च ला ) स्नात्वा । हे विभो ! चान्यत् शुचिकुसुमफलैरर्चयित्वा । पुन किं कृत्वा [३] । क्षितिधर-कुहरग्रावपर्यङ्कमूले ध्येये कर्मणि ध्यानं निवेश्य । क्षितिधरस्य कुहरं क्षितिधरकुहरम् । क्षितिधरकुहरस्य यत् ग्राव तदेव पर्यंक तस्य यन्मूल [ तत् ] क्षितिधरकुहरग्रावपर्यङ्कमूल तस्मिन् । किं० अहम् [२] । आत्मारामः । पुन किं० अहम् [२] । फलाशी । पुन किं० अहम् [३] । त्वत्प्रसादाद् गुरुवचनरतः । पुन किं० अहम् [१] । ध्यानमार्गैकप्रश्नः ( °धैक, °प्रश्ने ) । [ पुन किं० अहम् [२] । ] तव चरणरतः ॥ ९५ ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारङ्गाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।—

१ ज कुवलयति । २ च सुदृढतर° । ३ ग सुखमिति । ४ ख. ग [illegible] नियोज्य । ५ ह. मूल । ६ ग. °पभोषलीनो । ७ छ. दु खान् । ८ ख मोक्षे कदाहं, घ. मोक्षेक-दाहं । ९ च प्रश्ने; ह छ ज °घलै ।

येषां [1]नैर्झरमम्बु पानमुचितं [2]रत्यैव विद्याङ्गना
. . मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥ ९६ ॥

येषां पुरुषाणामेवंविधा स्थितिः, अहमेवं मन्ये त एव परमेश्वराः । का का स्थितिः ? । शैलशिला शय्या । गिरिगुहा गृहम् । तरूणां त्वचो वस्त्रम् । सुहृदः सारङ्गाः । ननु निश्चितं क्षितिरुहां वृक्षाणां कोमलैः फलैः वृत्तिः । नैर्झरमम्बु पानं । एवं निश्चयेन रत्या सह उचितम् अङ्गना विद्या । येषामिति स्थितिः ते ईश्वराः यैः शिरसि सेवाञ्जलिर्न बद्धः ॥९६॥

सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीविच्छटायां
[3]सद्वृत्तं कल्पयन्त्यां [4]वटविटपिभवैर्वल्कलैः सत्फलैश्च ।
कोऽयं विद्वान् विपत्तिज्वरजनितरुजाऽतीव दुःखासिकानां
वक्त्रं [5]वीक्षेत [6]दुःस्थे यदि हि न बिभृयात् स्वे कुटुम्बेऽनुकम्पाम् ॥ ९७॥

हि निश्चितम्। यदि चेत् दुःस्थे (हं. दुस्थे) [स्वे] स्वकीये कुटुम्बेऽनुकम्पां कृपां न बिभृयात् । यद्वयोर्नित्यसंबन्ध इति न्यायात् । तदा कोऽयं विद्वान् अतीव दुःखासिकानां नारीणां वक्त्रं वीक्षेत । अपि तु न कोऽपि । विपत्तिज्वरजनितरुजा विपत्तिरेव ज्वरः विपत्तिज्वरः विपत्तिज्वरेण जनिता रुक् विपत्तिज्वरजनितरुक् तया । कस्यां सत्याम् ? । त्रिलोकीसरिति गङ्गायां सत्यामेव । किं० सरिति ? । हरशिरश्चुम्बिनीविच्छटायां हरशिरश्चुम्बिनी ईश्वरमस्तकस्पर्शिनी (ख. घ. °कस्य स्थानी) नीविच्छटा काञ्चीप्रदेशो यस्याः सा हरशिरश्चुम्बिनीविच्छटा तस्याम् । पुनः किं० त्रिलोकीसरिति ? । सद्वृत्ते सदाचारे कल्पयन्त्यां प्रेरयन्त्यां । कैः ? । सत्फलैः । चान्यत् । वल्कलैः । किं० सत्फलैः वल्कलैः ? । वटविटपिभवैः वटवृक्षोद्भवैः ॥ ९७ ॥

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः
कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ।
आसन्नं मरणं च मङ्गल[7]समं यस्यां समुत्पद्यते
तां [8]काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते ॥ ९८ ॥

तां काशीं (हं. कासी) परिहृत्य (हं. घ. छ. °त्यक्त्वा)। हन्त इति खेदे। विबुधैः किं अन्यत्र स्थीयते । अपि तु न । यस्यां काश्यां उद्यानेषु विचित्रभोजनविधिः । चान्यत् । तीव्रातितीव्रं तपः । चान्यत् सुवस्त्रं कौपीनावरणं मण्डनम् । चान्यत् यस्यां अमितं भिक्षाटनम् । चान्यत् । यस्यां] काश्यां मङ्गलसमं आसन्नं मरणं समुत्पद्यते । तां काशीं मुक्त्वा अन्यत्र कथं स्थीयते ॥ ९८ ॥

---

१ ख. घ. घ. निर्झरम् । २ ख. ग. रत्येव । ३ च. सद्वृत्तां; छ. सद्वृत्ते; ज. सद्वृत्तं । ४ ख. वटविटप; हं. घ. वटविटपि; छ. ज. वटविटप । ५ ख. घ. छ. वीक्ष्येत । ६ ख. घ. दुःस्थे; ग. °दुस्थो । ७ घ. °समयं । ८ हं. कासी ।

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितुर्
निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ९९ ॥

यदि प्रभुः स्वामी येषां वचो द्वारेषु श्रुत्वा स्थित्वा इति द्रक्ष्यति कुप्यति । इती किम् ?। नायं ते समयः संप्रति प्रस्तावो नास्ति । अधुना रहस्यं मन्त्रालोचनाद्यः ( इं. लोचः ।) [ नाथः ] स्वामी निद्राति प्रमीलां कुरुते । रे चेतः ! तान् प्रभूनपहाय विश्वेशितुः परमेश्वरस्य महेशस्य भवनं याहि । किं० भवनम् ? । निर्दौवारिकनिर्दयोक्त्यपरुषम् । कोऽर्थः ? । निर्गतो दौवारिको यस्मात् तन्निर्दौवारिकं प्रतीहाररहितम् । निर्दयोक्त्या कठोरोक्त्या अपगतो रुट् कोपो यस्मात् तत् निर्दयोक्त्यपरुषं निर्दौवारिकं च निर्दयोक्त्यपरुषं च तत् । पुन. किं० ? । निःसीमशर्मप्रदम् निःसीमं सीमाहीनं शर्म सौख्यं प्रददातीति [ तत् ] निःसीमशर्मप्रदम् । अनर्गलसौख्यदायकमित्यर्थः ॥९९॥

प्रियसखि विपद्दण्डव्रातप्रपातपरंपरा-
परिचयचले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात् पिण्डीकृत्य प्रगल्भकुलालवत्
भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ १०० ॥

हे प्रियसखि ! (स. प्यासे) खलो विधिः पराङ्मुखो दैवः नो जानीमः अत्र इदानीं किं विधास्यति । अयं विधिः चिन्ताचक्रे निधाय बलात् पिण्डीकृत्य मनो भ्रमयति । किं० चिन्ताचक्रे ? । विपद्दण्ड [ व्रात ] प्रपातपरंपरापरिचयचले विपदेव दण्डः विपद्दण्डः तस्य या प्रपातपरंपरा तस्याः परंपरायाः परिचयस्तेन चलश्चञ्चलः विपद्दण्डप्रपातपरंपरापरिचयचलस्तस्मिन् । मनः कमिव ? । मृदमिव । विधि क इव ? । प्रगल्भकुलालवत् । यथा प्रगल्भकुलालः मृदं मृत्तिका बलात् पिण्डीकृत्य चक्रे निधाय भ्रमयति । एतावता विपरीतविधेः विलसितं कोऽपि न वेत्ति ॥ १०० ॥

महेश्वरे वा जगतां महेश्वरे जनार्दने वा जगदन्तरात्मनि ।
न भेदहेतुः प्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥१०१॥

मे मम महेश्वरे वा अथ वा जनार्दने वासुदेवे भेदहेतुः प्रतिपत्तिर्नास्ति । किं० महेश्वरे ? । जगतां महेश्वरे त्रिभुवनस्य अधिपतौ । किं० जनार्दने ? । जगदन्तरात्मनि जगतां

१ इं. ख. ग. ज. द्रक्षति । २ ज. ते च स्थानप । ३ ग. पाहि । ४ छ. °पुरुषं । ५ ग. प्रियसख । ६ इं. ग. च. छ. ज. कोशेषु 'व्रात' इति नास्ति । ७ ज. °प्रताप । ८ घ. खलु । ९ ग. °तामधीश्वरे । १० ख. ग. घ. तयोर्न भेदः; च. नो भेदहेतुः ।

विश्वत्रयाणां अन्तरात्मा जगदन्तरात्मा तस्मिन्। उभयोर्द्वयोर्मम चेतस्यन्तरं नास्ति। तथापि एवं सत्यपि तरुणेन्दुशेखरे श्रीमहेशे मम भक्तिः (छ° एषा मिथ्यात्विनामुक्ति) ॥ १०१ ॥

रे कन्दर्प करं कदर्थयसि किं कोदण्डटङ्कारवैः
रे रे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ।
मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ १०२ ॥

रे कन्दर्प ! कोदण्डटङ्कारवैः करं किं कदर्थयसि। रे रे कोकिल ! कोमलैः कलरवैः पञ्चमस्वरैः (त्वं) किं वृथा जल्पसि। हे मुग्धे ! त्वं (? तव) कटाक्षैरलं पूर्यताम्। किं० कटाक्षैः ?। स्निग्धविदग्धमुग्धमधुरक्षेपैः स्निग्धश्च विदग्धश्च मुग्धश्च मधुरश्च क्षेपो येषां ते स्निग्धविदग्धमुग्धमधुरक्षेपाः तैः। भवताम् पूर्वोक्तानां कृतं निखिलं अपि व्यर्थम्। अस्माकं चेतः चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते। चुम्बितं चन्द्रचूडस्य महेशस्य चरणध्यानामृतं येन तत् चुम्बितचन्द्रचूडचरणध्यानामृतम् ॥ १०२ ॥

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
निश्चिन्तं सुखसाध्यभैक्ष्यमशनं शय्या श्मशाने वने ।
मित्रामित्रसमानतातिविमला चिन्ताऽथ शून्यालये
ध्वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति ॥ १०३ ॥

योगी सर्वसङ्गपरित्यागी सुखं तिष्ठति। किं० योगी ?। ध्वस्ताशेषमदप्रमादमुदितः ध्वस्ता निराकृता अशेषा मदप्रमादा येन स ध्वस्ताशेषमदप्रमादस्तेन मुदितः ध्वस्ताशेषमदप्रमादमुदितः। यस्य योगिनः शतखण्डजर्जरतरं कौपीनम्। पुनः कन्था तादृशी पूर्वोक्ता शतखण्डजर्जरतरा। निश्चिन्तमशनम्। किं० अशनम् ?। सुखसाध्यभैक्ष्यम् सुखेन साध्य सुखसाध्यम् एवंविधया भिक्षाया समुत्पन्नं सुखसाध्यभैक्ष्यम्। अन्यच्च शय्या श्मशाने वने वनान्ते। तथा मित्रामित्रसमानता मित्रश्च अमित्रश्च मित्रामित्रौ मित्रामित्रयोः सादृश्यं मानन (ख. सामान्यं) मित्रामित्रसमानता। अथ पश्चात् शून्यालये अतिविमला अतिनिर्मला शुक्लध्यानलक्षणा चिन्ता। अतः कारणात् योगी निर्मुक्तः संसारे सुखं (ह. छ० न) तिष्ठति ॥ १०३ ॥

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भवस्
तत् कस्यैव कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ।

---

१ ग. जर्जरतरं, च. °जर्जरतरा। २ म. घ. निश्चिन्त्यम्। ३ घ. मुदप्रमोद°।
४ छ. स्यकस्यैव, ह. तत्कस्यैव।

आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोच्छित्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ १०४ ॥

रे लोकाः ! चेष्टितैः मननविकल्पव्यापारैः कृतं पूर्यताम् । यदि चेदस्मद्वचः श्रद्धेयं श्रद्धायोग्य श्रद्धेय अनुमत्य(मान्य)मित्यर्थ, तदा स्वधामनि स्वकीयशरीरमन्दिरे कामोच्छित्तिवशे कन्दर्पनयार्थे केवल चेतः समाधीयताम् । किं० चेत ? । आशापाशशतोपशान्तिविशदम् आशापाशस्य शत आशापाशशत तस्य उपशान्त्या विशद निर्मल आशापाशशतोपशान्तिविशदम् । यतो भोगा भङ्गुरवृत्तयः भङ्गुरा विनश्वरा वृत्तिर्येषा ते भङ्गुरवृत्तय । किं० भोगा ? । बहुविधाः अनेकप्रकारा एव निश्चयेन । बहुविधैर्भोगै अयं भवः संसार एव । रे लोका ! तत् कस्मात् कारणात् कस्य कृते परिभ्रमत चङ्क्रमण कुरुत ॥ १०४ ॥

धन्याना गिरिकन्दरे निवसता ज्योतिः परं ध्यायताम्
आनन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकं तु मनोरथैः परिचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुपामायुः परिक्षीयते ॥ १०५ ॥

धन्याना मनुष्याणा एवंस्थितानां आयुः परिक्षीयते । किं० धन्यानाम् ? । गिरिकन्दरे निवसताम् । धन्याना किं कुर्वताम् ? । पर ज्योतिर्ध्यायताम् । येषा धन्याना आनन्दाश्रुजलं निःशङ्कं शङ्कारहित शकुनाः पक्षिण पिबन्ति । किं० शकुना ? । अङ्केशयाः उत्सङ्गसमारूढा । तु पुन अस्माकं अधन्याना आयुरेव मनोरथैः परिक्षीयते । किं० अस्माकम् ? । परिचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुपा परिचिता या प्रासादवापीतटक्रीडाकाननकेलयस्तासां कौतुके जुषन्तीति [ परिचित ] प्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषस्तेषाम् ॥ १०५ ॥

आघ्रातं मरणेन जन्म जरयाऽप्यत्युज्ज्वलं यौवनं
संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः ।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनैर्
अस्थैर्येण विभूतिरप्यपहता ग्रस्तं न किं केन वा ॥ १०६ ॥

एभि प्रकारै किं न ग्रस्तम् । अन्यच्च के जनाः न ग्रस्ता । मरणेन जन्म आघ्रातं स्पृष्टमित्यर्थ । अत्युज्ज्वलं यौवन जरया आघ्रात स्पृष्टम् । धनलिप्सया सतोषः आघ्रात । प्रौढाङ्गनाविभ्रमैः शमसुखं आघ्रातम् निरस्त (ह छ ग्रस्तम्)। मत्सरिभिर्लोकैः गुणाः आघ्राता विनाशिता । व्यालैः दुष्टगजै वनभुव आघ्राता । दुर्जनैर्नृपा भूपाला आघ्राता ग्रस्ता । विभूतिरपि अस्थैर्येण आघ्राता अपहृता इत्यर्थं । तर्हि कालेन किं किं न विनष्ट किं किं न विनङ्क्ष्यति ॥ १०६ ॥

---

१ ग मनोरथोपरि° । २ ह च ज पर क्षीयते । ३ ग विद्युच्चलं; ह °प्युत्युज्ज्वल । ४ ग नृपो । ५ ग धृतिर्जगत्यपहता । ६ ग केन वा ।

आधिव्याधिशतैर्वयस्यतितरामारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतत्रिवच्च विवृतद्वारा इव व्यापदः ।
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्
तत् किं केन निरङ्कुशेन विधिना यन्निर्मितं सुस्थितम् ॥ १०७ ॥

नाम इति संबोधने । तत् किम् यत् निरङ्कुशेन निराशङ्केन [ केन अव्यवस्थितेन ] विधिना दैवेन सुस्थितं निर्मितम् । किं तत् ? । वयसि शरीरे आधिव्याधिशतैः अतितरां अतिशयेन आरोग्यमुन्मूल्यते । तत्र आधिर्मानसी पीडा व्याधी रोगसमुद्भवा । चान्यत् । [ यत्र ] अ(स्य)स्मिन् दैवनिर्माणे लक्ष्मीः पतत्रिवत् पक्षिवत् पतनस्था (स्व)भा वर्तते । व्यापदः विवृतद्वारा इव उद्घाटितकपाटा इव वर्तन्ते । अवश्यं निश्चितं आशु शीघ्रं मृत्युर्यमः जातं जातं उत्पन्नमुत्पन्नं आत्मसात् करोति आत्मायत्तं विधत्ते । ततः अस्य दैवस्य निर्माणे किमपि व्यवस्थितं स्थिरं नास्तीत्यागमः ॥ १०७ ॥

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भमध्ये
कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः ।
नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ १०८ ॥

रे मनुष्याः वदन्तु (? त) कथयन्तु (? त) । यदि चेत् संसारे स्वल्पमपि सुखं किंचिदस्ति । गर्भमध्ये कृच्छ्रेण कष्टेन नियमिततनुभिः संकोचितशरीरैः स्थीयते । किं० गर्भमध्ये ? । अमेध्यमध्ये अमेध्यं मध्ये यस्य तदमेध्यमध्यं तस्मिन् । अस्मिन् संसारे यौवने विप्रयोगः । किं० यौवने ? । कान्ताविश्लेषदुःखव्यतिकरविषमे कान्तायाः विश्लेषः कान्ताविश्लेषः तस्य योऽसौ दुःखव्यतिकरस्तेन विषमः ( छ. निकरः ) कान्ताविश्लेषदुःखव्यतिकरविषमस्तस्मिन् । अपि पुनः नारीणामवज्ञा अवगणनं विलसति । अपि पुनः नियतं निश्चितं वृद्धभावः असाधुः । अस्मात् कारणात् संसारे किमपि सौख्यं नास्ति ॥ १०८ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्व-वृद्धत्वयोः ।

---

१ ग. जन्तस्य विविधैः । २ ख. ग. घ. उन्मील्यते । ३ ग. पतन्ति तत्र । ४ ख. घ. सुस्थिरम् । ५ ग. विषमो । ६ क. विलसितनि°; ग. वसतिरनि° । ७ छ. वदतु । ८ ग. स्वरूपमल्पमस्ति । ९ ज. कृतं; ई. तदर्धीकृतं । १० ख. घ. कदाचिदर्धमधिकं । ११ ख. वृद्धत्वबाल्ये गतम्; घ. ज. बाल्यत्ववृद्धत्वयोः ।

शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ १०९ ॥

[ जीवे जीवितव्ये ] प्राणिनां सौख्यं कुतः । कथम् ? । नृणां मनुष्याणां आयुर्वर्षशतं परिमितम् । [ तदर्धं ] तस्यायुषो वर्षशतप्रमाणस्यार्धं रात्रौ गतं शयानस्य ( छ. शयितस्य ) । ततोऽनन्तरं शेषं पञ्चाशत् । तस्यार्धस्य पञ्चाशद्वर्षस्य कदाचिदप्यधिकमर्धमपि बाल्य(ल्ल)त्ववृद्धत्वयोर्गतम् । शेषं आयुः व्याधिवियोगशोकसहितं सेवादिभिः कर्मभिर्नीयते । किं० जीविततव्ये ? । वारितरङ्गचञ्चलतरे वारिणः समुद्रस्य [ तरङ्गा ] वारितरङ्गास्तद्वत् चञ्चलतरे वारितरङ्गचञ्चलतरस्मिन् ॥ १०९ ॥

[ This is the real end of the original Dhanasāra commented version. But the ड़. codex continues beyond, while some of the others as indicated, various (different) additional stanjas without any commentary at all ].

[1]अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीविदारकुठारिका
जठरपिठरी दुःपूरेयं करोति विडम्बनाम् ॥ ११० ॥

इयं दुःपूरा जठरपिठरी उदरकोष्ठिका विडम्बनां करोति प्राणिनां विगोपयति । किं० जठरपिठरी ? । अभिमतमहामानग्रन्थिप्रभेदपटीयसी अभिमतः स्तुत्यः योऽसौ महामानग्रन्थिः तस्य [प्र]भेद(दि)विदारणे पटीयसी समर्था । पुनः किं० जठरपिठरी ? । गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका गुरुतरो योऽसौ गुणग्रामः तान्येव ( ? स एव ) अम्भोजानि तेषां संकोचे स्फुटा प्रकट उज्ज्वला चन्द्रिका । यथा चन्द्रिकायां प्रोल्लसितायां अम्भोजानि कमलानि संकोचमाप्नुवन्ति तथा अस्या जठरपिठर्याः [ कारणात् ] गुणग्रामाः संकोचं प्राप्नुवन्ति । पुन. किं० जठरपिठरी ? । विपुलविलसल्लज्जावल्लीविदारकुठारिका विपुला विस्तीर्णा विलसन्ती या लज्जावल्ली तस्याः विदारे विदारणे कुठारिका विपुलविलसल्लज्जावल्लीविदारकुठारिका । एवंविधेन जठरेण विडम्बितं जगत् ॥ ११० ॥

अथ तृष्णातरङ्गितचेतसः परिणाममाह—

[5]ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्च्य(ञ्च)न्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।

---

१ ड़. ज. 'विदित' । २ ख. धर्मः । ३ ख. घ. च. छ. कोशेष्वपि दृश्यते, न तु टीकायाम् । ४ ख. 'टोद्य । ५ ग. च. छ. Baroda 1781 कोशेषु दृश्यते ।

न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययाः

वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥ १११ ॥

**अहो** इति आश्चर्ये । अमलधियो निर्मलबुद्धयो दुष्करं कुर्वन्ति । दुःखेन क्रियत इति दुष्करम् । यत् केनापि तुच्छजनेन कर्तुं न शक्यते तदमलधीभिः क्रियते । किं वि० अमलधियः ? । **ब्रह्मज्ञानविवेकिनः** परब्रह्मस्वरूपवेत्तारः । दुष्करं किं कुर्वन्ति ? । यत् यस्मात् कारणात् ते अमलधियः **एकान्ततो निःस्पृहाः** सन्तः धनानि मुञ्चन्ति । किं० धनानि ? । **उपभोगभाञ्ज्यपि** परिभोगं गतवन्त्यपि । तानि धनानि पुरा पूर्वं न प्राप्तानि । चान्यत् [न]संप्रतीदानीं । तस्य ऋद्धेः प्राप्तौ न दृढप्रत्ययाः । परं तथापि वयं [ वाञ्छामात्रपरिग्रहाण्यपि ] वाञ्छामात्र[स्य] मनोरथमात्र[स्य] परिग्रहाण्यपि त्यक्तुं न शक्ताः न समर्थाः ॥ १११ ॥

[1]व्याघ्रीव तिष्ठति जरा परितर्कयन्ती

रोगाश्च शत्रव इव प्रविशन्ति देहम् ।

आयुः परिश्र(स्र)वति भिन्नघटादिवाम्भो

लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ११२ ॥

**इति चित्रम्** । लोकः तथापि अहितं पापं आचरति । तथापि किम् ? । **जरा परितर्कयन्ती** हेरयन्ती **तिष्ठति** । जरा केव ? । **व्याघ्री इव** । यथा व्याघ्री जीवान् परितर्कयन्ती तिष्ठति । चान्यत् । **रोगाः देहं** प्रहरन्ति । रोगाः क इव ? । **शत्रव इव** यथा शत्रवः प्रहरन्ति । **आयुः परिश्र(स्र)वति** । आयुः किमिव ? । **भिन्नघटादम्भ इव** । यथा भग्नघटात् अम्भः परिश्र(स्र)वति तथा आयुरपि । तथापि लोकाः असारं सारमेव चिन्तयन्ति ॥ ११२ ॥

[2]भोगास्तुङ्गतरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः

स्तोकान्येव दिनानि यौवनसुखप्रीतिः प्रियेषु स्थिता ।

तत् संसारमसारमेव निखिलं बुद्ध्वा बुधान् बोधये

लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ११३ ॥

तत् तस्मात् कारणात् अहं बुधान् पण्डितान् बोधये । किं कृत्वा ? । **निखिलं असारमेव संसारं बुद्ध्वा** । हे जनाः ! **लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम्** । लोकानामनुग्रहः लोकानुग्रहस्तेन पेशलं मनोज्ञं लोकानुग्रहपेशलं तेन । **भोगास्तुङ्गतरङ्गभङ्गचपलाः** । तुङ्गानां तरङ्गानां(णां)कल्लोलानां ये भङ्गा रचनास्तद्वच्चपलास्तुङ्गतरङ्गभङ्गचपलाः । अन्यच्च । **प्राणाः क्षणध्वंसिनः** क्षणेन क्षणमात्रेण ध्वंसो विध्वंसो विद्यते येषां ते क्षणध्वंसिनः । **यौवनसुखप्रीतिः प्रियेषु** वल्लभजनेषु **स्तोकानि दिनानि स्थिता** ॥ ११३ ॥

१ ख. ग. घ. ङ. ज. कोशेषु दृश्यते । २ च. छ. ज. कोशेषु दृश्यते ।

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।[1]
तदनु[2] तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ११४॥

अहह कष्टम् । विधेर्दैवस्य अपण्डितता विलोक्यतां मौढ्यं निरीक्ष्यताम् । तावत् पूर्वं अशेषगुणाकरं पुरुषरत्नं सृजति । किं० पुरुषरत्नम्[3] । भुवः पृथिव्या अलंकरणं भूषणम् । चेत् यदि भूषणं तदपि पुरुषरत्नं [ तत्क्षणभङ्गि ] तत्क्षणमेव भङ्गि करोति तत्कालं भङ्क्ते । तदा विधेर्मौढ्यमेव । चेत् तादृशं पुरुषरत्नं वसुधामण्डले अमरत्वं न प्राप्नोति तदा चिरजीव्यपि वरम् ॥ ११४॥

[4]जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ ११५ ॥

स कूर्मः एक एव जातः येन पृथुभुवनभराय विशालपृथ्वीमण्डलभाराय पृष्ठं अर्पितम् । ध्रुवस्य ध्रुवमण्डलस्य जन्म श्लाघ्यम् । यत्र यस्मिन् ध्रुवे नियमितं नियन्त्रितं तेजस्विचक्रं भ्रमति । तावन्तरेणापरे जन्तवः ब्रह्माण्डोदुम्बरान्तः मशकवत् जातनष्टाः वर्तन्ते । ब्रह्माण्ड एव [उ]दुम्बरं ब्रह्माण्डोदुम्बरं तस्यान्तर्मध्ये ब्रह्माण्डोदुम्बरान्तः मशकरूपाणिवत् जाताश्च नष्टाश्च जातनष्टाः । किं० अपरे जन्तवः ? । परहितकरणे परवाञ्छितपूरणे न उपरिष्टात् चान्य-अधः । [ पुनः किं० जन्तवः ? । ] संजातव्यर्थपक्षाः संजातः समुत्पन्नः व्यर्थो निरर्थकः पक्षो येषां ते संजातव्यर्थपक्षाः । उभयोरपि पक्षयोरिहलोकपरलोकलक्षणयोः एकोऽपि न किंचित् ॥ ११५॥

[5]क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुर्
नरः संसाराङ्के विशति यमधानीयवनिकाम्[6] ॥ ११६ ॥

नरः प्राणी संसाराङ्के संसारोत्सङ्गे यमधानीयवनिकां तिरस्करणीं विशति प्रविशति । किं० नरः ? । जराजीर्णैरङ्गैर्वलीमण्डिततनुर्नट इव वर्तते । किं कृत्वा ? । क्षणं बालो भूत्वा क्षणमपि युवा भूत्वा । किं० युवा ? । कामरसिकः कामस्य रसेन वर्तते इति कामरसिकः । तेन दीव्यति संसृष्टं तरतीकण् चरत्यपि इकण् प्रत्ययः । पुनः किं कृत्वा ? । वित्तैर्हीनो भूत्वा अपि च क्षणं संपूर्णविभवो भूत्वा । यममन्दिरे प्रविष्टो भवति ॥ ११६ ॥

---

१ च छ ज. कोशेषु लभ्यते । २ भुवि, भव इत्यपि । ३ तदपि । ४ च. छ. ज कोशेषु दृश्यते । ५ सर्वेषु कोशेषु अधिकत्वेन दृश्यते । ६ भ. च. ज. जवनिकाम् ।

पातालान्न विमोचितो बत बलिर्नीतो न मृत्युः क्षयं
नोन्मृष्टं शशिलाञ्छनं च मलिनं नोन्मूलिता व्याधयः ।
शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं
चेतः सत्पुरुषाभिमानगणनां मिथ्या वहन् लज्जसे ॥ ११७ ॥

रे चेतः ! मिथ्या सत्पुरुषाभिमानगणनां वहन् न लज्जसे न व्रीडां वहसि । कथम् ? । बत इति खेदे । पातालात् बलिर्बन्धनान्न विमोचितः । अन्यच्च मृत्युर्यम. क्षयं न नीतः निधनं न प्रापितः । चान्यत् । शशिलाञ्छनं न उन्मृष्टं न परामृशत् (१०मृष्टम्) । किं० शशिलाञ्छनम् ? । मलिनं मलीमसम् । चान्यत् । व्याधयो जन्तोरुत्पातकृते नोन्मूलिताः । शेषस्यापि धरणीधरस्यापि धरां स्वस्कन्धे विधृत्य क्षणं क्षणमात्रं भारावतारो न कृत । रे आत्मन् ! तदा त्वं सत्पुरुषत्वं किं वहसि ॥ ११७ ॥

प्रशान्तशास्त्रार्थविचारचापलं निवृत्तनानारसकाव्यकौतुकम् ।
निरस्तनिःशेषविकल्पविस्तरं प्रपत्तुमन्विच्छति शंकरं मनः ॥ ११८॥

मनः चेतः शंकरमनु प्रपत्तुमिच्छति । किं० मनः ? । प्रशान्तशास्त्रार्थविचारचापलं प्रशान्ताः ये शास्त्रार्थास्तेषां शास्त्रार्थानां विचारेषु चापलम् । पुन किं० मनः ? । निवृत्तनानारसकाव्यकौतुकं - नि शेषं वृत्तं प्रवृत्तं नानारसकाव्यकौतुकं यस्य तत् । पुनरपि किं० मन ? । निरस्तनिःशेषविकल्पविस्तरं निरस्त. निराकृत नि शेषो विकल्पाना विस्तरो यस्य तत् । एवंविधं मनः शंकरं वाञ्छति ॥ ११८ ॥

॥ इति भर्तृहरटीकेयं तृतीयस्य वैराग्यशतकस्य समाप्ता ॥

---

१ ख. घ. च. छ. ज. BASB 7747 । २ ख. घ. छ. समुद्धृतो । ३ ख. छ. मृत्युर्न नीतः । ४ छ. शशलाञ्छनस्य । ५ छ. धरां । ६ छ. तारावतारः । ७ ङ. °गणितां, क. °पदवीं । ८ क. खिद्यसे, छ. विद्यसे । ९ च. छ. ज. कोशेषु प्राप्यते । १० छ. °धास्य° । ११ च. ज. °विस्तरं । १२ च. छ. ज. प्रयातुम् ।

[ टीकाकारकृता स्वप्रशस्ति । ]

श्रीपार्श्वनाथगणभृच्छिवदत्तनामा
केशी तदन्वयगुरुः शिवदत्तशिष्यः ।
सूरिः स्वयंप्रभगुरुर्गुरुताधिकश्री-
रत्नप्रभः प्रभुरनेकगुणः सदापि ॥ १
श्रीयक्षदेवसुगुरुर्गरिमागरिष्ठो
जज्ञे सदैव यतिमार्गगुणाभिरामः ।
ऊकेशगच्छगगनांगणपूर्णचन्द्रः
श्रीकक्कसूरिरपरः श्रुतवारिधिर्यः ॥ २
श्रीदेवगुप्तगुरुरार्चितपादपद्मः
सेवापरैर्नरवरैः प्रथितावदातः ।
सिद्धाख्यया गुरुरति[र]धृतिमानधीशः
शिष्योऽस्य चारुरतितत्त्वविचारसारः ॥ ३

त्रिभि कुलकम् ( विशेषकम् ) ।

श्रीविक्रमार्कवरवच्छ(?त्स)रतोऽक्षवह्नि
पञ्चैकवर्ष ( १५३५ ) इह योधपुरेऽतिरम्ये ।
श्रीसातले नरवरे वरमश्रिराजे
श्रीजैनमश्रिणि महामहिमानिधाने ॥ ४
श्रीसिद्धसूरिपदपङ्कजराजहंसः
पूज्यप्रसादधवलीकृतसत्प्रशंसः ।
रम्यां तु भर्तृहरकाव्य-नवीनटीकां
यो व्याहरत् प्रमुदितो धनसार एषः ॥ ५ युग्मम् ।
वैयग्र्यदोषकलितेन मया कदाचित्
साहित्यलक्षणपदेषु यदा विरुद्धः ।
संदर्भ एष विदधे परिगूढमूढ-
भावात् तदा हि विबुधैः परिसो(?शो)ध्य एव ॥ ६

यस्याः प्रसादवशतः कवयः सदापि
पारं व्रजन्ति नयनीरधिसङ्गमस्य।
तां भारतीं भगवतीं सततां (?तं) स्मरामि
श्रीसद्गुरोरपि पदान् विहितप्रसादान् ॥ ७

यावद् सुरगिरिशिखरे भुवमण्डलममलमेतदाभाति।
तावद् विहिता नयाद्रीकेयं घनगिरी नाम्नी ॥ ८

॥ प्रशस्तिरेषा ॥

॥ श्रीः ॥

## परिशिष्टम्।

[टीकाकारेण धनसारेण विदुषा शतकत्रयमध्ये यानि पद्यानि शेषरूपाणि मत्वा मूलग्रन्थे न स्वीकृतानि, तेषां पद्यानां पश्चात् परिशिष्टरूपां टीकां कृत्वा ग्रन्थान्ते तानि पद्यानि संकलितानि सन्ति।]

### अथ भर्तृहरटीकायां शेषत्वक्तकाव्यानां टीका लिख्यते।

### नीतिशतकमध्यान्येतानि [पद्यानि]

अथ सज्जनस्तुतिमाह—

१. अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारसंतुष्टैः।
परपरीवादनिवृत्तैः क्वचित् क्वचिन् मण्डिता वसुधा ॥ ७८ ॥

अप्रियेत्यादि०। वसुधा पृथिवी क्वचित् प्रदेशे स्थाने एवंविधैः पुंभिर्मण्डिता अलंकृता वर्तते। कीदृशैः?। अप्रियवचनदरिद्रैः अप्रियवचनेषु दरिद्राः निःस्वास्तैरप्रियवचनरहितैरित्यर्थः। पुनः कीदृशैः?। प्रियवचनाढ्यैः प्रियवचनैराढ्याः प्रियवचनाढ्यास्तैः मधुरवचनभृतैः। पुनः कीदृशैः?। स्वदारसंतुष्टैः स्वदारेषु निजकलत्रेषु संतुष्टाः तृप्ताः स्वदारसंतुष्टास्तैः। पुनः कीदृशैः?। परपरिवादनिवृत्तैः परेषां परिवादो निन्दा परपरिवादस्तस्मान्निवृत्ताः विरतास्तैरिति। मण्डनमपि क्वचिद् भवति ॥ ७८ ॥

अथ दैवगतिस्वरूपमाह—

२. अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥९२॥

अरक्षितं वस्तु दैवरक्षितं सत् तिष्ठति स्थिरीभवति। सुरक्षितं यत्नरक्षितमपि दैवहतं सत् विनश्यति विशेषेण नाशमुपयातीत्यर्थः। एतद् विशेषतो द्रढयति—अनाथोऽपि दीनोऽपि वने विसर्जितः सन् जीवति दैवानुकूल्य। कृतप्रयत्नोऽपि पुमान् गृहेऽपि स्थितो दैवप्रतिकूलतो मन्दभाग्येन न जीवति म्रियते। ततो दैवमेव प्रमाणम् ॥ ९२ ॥

अथ स्वकीय-परकीयौ हिताहितस्वरूपेण हेयोपादेयतया प्ररूपयति—

३. परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ ९४ ॥

हितवान् गुणकारकः परोऽपि आत्मव्यतिरिक्तः [अपि] परः शत्रुर्वा बन्धुः स्वजनो ज्ञेयः। अहितः विरूपकर्ता बन्धुरात्मीयोऽपि परः शत्रुर्ज्ञातव्यः। एतदेव दृष्टान्तेन द्रढयति—यथा देहजो देहादुत्पन्नो व्याधिः रोगः अहितः संतापकारी स्यात्। आरण्यं वनोद्भवमौषधं भेषजं हितं सुखकृत् स्यात् ॥ ९४ ॥

अथ दुर्जनस्नेहं सज्जनकोपतुल्यं निरूपयति–

४. न भवति भवति च न चिरं भवति चिरं चेत् फले विसंवादः।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ९२ ॥

सत्पुरुषाणां कोपः क्रोधः नीचानां दुर्जनानां स्नेहेन मित्रत्वेन तुल्यः सदृक्। कथम्?। प्रथमं सज्जनानां कोपो न भवति नास्ति। च पुनर्भवति तदा चिरं न भवति। क्षणाद् यातीत्यर्थः। चेच्चिरं भवति तदा फले अग्रे कार्योत्पत्तौ विसंवादः फलदायी न भवति। निष्फलो भवतीत्यर्थः। दुर्जनस्नेहोऽपि न भवति। यदि भवति तर्हि चिरं न भवति। चिरं भवति चेत् फले कार्यकाले विसंवादः स्यात्, स्नेहः सफलो न भवति। अत एव सत्पुरुषकोपतुल्यः ॥ ९२ ॥

अथ नियतिस्वरूपेण स्वोपदेशमाह–

५. यदभावि न तद् भावि भावि चेन्न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ९३ ॥

हे पुरुष! इति अयं [चिन्ताविषघ्नः] अगदस्त्वया किं न पीयते। अगद औषधम्। इतीति किम्?। यद् वस्तु अभावि तन्न भावि। यत्र भवने नियतिः नास्ति तत् कदापि न भवति। चेद् भावि भवनशीलं कार्यं तदन्यथा न भवति। सदैव भवतीत्यर्थः। एवं ज्ञात्वा किं मनसि दोदूयसे–ममेदं जातमिदं न जातमिति ॥ ९३ ॥

अथ दानविलम्बो न कार्य इति निवेदयति–

६. दातव्यं भोक्तव्यं सति विभवे संचयो न कर्तव्यः।
पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ ९४ ॥

पुरुषेण धनं देयं भोज्यम्। विभवे सति संग्रहो न कार्यः। अत्र निदर्शनम्–पश्य विलोकय। इहात्र लोके मधुकरीणां भ्रमरीणां संचितमर्थं एकत्रीकृतं मधु अन्ये भिल्ला हरन्ति गृह्णन्ति। पक्षे अर्थं द्रव्यम्।

अथ राजभिर्गुणिन एव पालनीयास्तदर्थमाह–

७. अविज्ञानाद् राज्ञो भवति नयहीनः परिजनस्
ततस्तत्प्राधान्याद् भवति न समीपे बुधजनः।
बुधैस्त्यक्ते राज्ये भवति न च नीतिर्गुणवती
विनष्टायां नीत्यां सकलमपि शुष्येन् नृपकुलम् ॥ ९५ ॥

राज्ञः अविज्ञानात् ज्ञानाभावात् परिजनः परिवारो नयहीनो भवति कुमार्गचारी भवति। ततः तस्मात् कारणात् तत्प्राधान्यात् अन्यायिपरिजनव्यापारात् बुधजनः राजसमीपे न भवति नागच्छति। मूर्खाः बुधजनप्रवेशं न ददाति (? ददति)। च पुनः

राज्ये त्यक्ते सति गुणवती नीतिर्न भवति । नीतौ विनष्टायां सत्या सकलमपि नृपकुलं शुष्येत् शोषं व्रजति । तस्मान्नृपे पण्डिता माननीया एव, यतो राज्यवृद्धिर्भवतीति वाक्यशेषः ॥९५॥

अथ राज्ञो नीतिं मालाकार(स्य)चरणेनाह—

८. उत्खातान् प्रतिरोपयन् कुसुमिताश्चिन्वँल्लघून् वर्धयन्
कुब्जान् कण्टकिनो बहिर्निर्गमयन् विश्लेषयन् संहितान् ।
अत्युच्चान् नमयन् शनैरवनतानुन्नामयन् भूतले
मालाकार इव प्रपञ्चचतुरो राजा चिरं नन्दति ॥ ९६ ॥

भूतले महीमण्डले राजा चिर नन्दति समृद्धिं प्राप्नोति । क इव ? । मालाकार इव । मालाकार कि कुर्वन् ? राजा च कि कुर्वन् ? । शनैः मन्द मन्द उत्खातान् उत्पाटितान् वृक्षान् प्रतिरोपयन् प्रतिस्था(ष्ठा)पयन् नूतनालवाले स्थापयन् । राजापि उत्खातान् नृपान् प्रतिरोपयन् नूतनस्थानाभिषिक्तान् कुर्वन् । मालाकार कुसुमितान् कुसुमानि जातानि येषु ते कुसुमिता[ ] । जातार्थे इतच् प्रत्यय । तान् चिन्वन् लुण्टन् । राजाप्येव कुर्वन् समदान् त्रोटयन् छेदयन् । पुन किं कुर्वन्नारामिक ? । लघून् वृक्षान् वर्धयन् । राजापि लघून् नृपान् नरान् वर्धयन् । पुन कुब्जान् कण्टकिनो [ बहिर्निर्गमयन् ] बहिर्निष्कासयन् । राजापि कुब्जान् स्तब्धान् कण्टकनरान् बहिर्निर्गमयन् । पुन सहितान् मिलितान् विश्लेषयन् पृथक् कुर्वन् । राजापि मिलितान् नृपान् विश्लेषयन् सन्ध्यादिनाऽऽपृथक् कुर्वन् । तथाप्यु( ? त्यु )च्चान् तरून् नमयन् नीचीकुर्वन् । राजाप्यत्युच्चान् नीचीकुर्वन् धनहरणादिना । तथा अवनतान् नम्रान् उन्नामयन् ऊर्ध्वीकुर्वन् । राजापि शनैर्मन्द मन्द तान् उन्नमयन् प्रौढीकुर्वन् चिर नन्दति । इति राज्ञो मालाकारसादृश्यम् ॥ ९६ ॥

अथोत्तम एव निजवंशे स्थाप्य एव निरूपयति—

९. दद्यात् साधुर्यदि निजपदे दुर्जनान् यत्र वंशे
तन्नाशाय प्रभवति नवो वाञ्छमानः स्वयं सः ।
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमाना-
राज्येऽपि स्याद् गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ ९७ ॥

यत्र वंशे साधुर्यदि निजपदे दुर्जनान् दद्यात् दुर्जन निजपदे स्थापयेदित्यर्थ । सः नवो दुर्जनो वाञ्छमानोऽपि स्वय तन्नाशाय प्रभवति वंशनाशाय भवति । तस्मात् कारणाद् विपुलमतिभिर्विशालबुद्धिभिरधमाना( नीचाना अवकाशो विकाश, स्थान प्रसारो न देयः । अत्र संसारे राज्येऽपि गृहपतिरिति श्रूयते । अस्माद् वाक्यत गृहपतिरपि राज्याधिकारी क्रियते, राज्यवंशोऽपि दुर्जनो न राज्याधिकारी क्रियते ॥ ९७ ॥

---

१ "सर्वेषा परिपक्वतामुपगतान् (?°मुपयता) गृह्णन् फलानी हि(?नीह) स " पाठान्तरम् ।

सुहृदयस्य साधुमार्गोपदेशमाह—

१०. यदि धनिनः सत्पुरुषा यदि च सुरूपाणि परकलत्राणि।
अनुपचितसुकृतसंचय तव हृदय किमाकुलीभावः॥ ९८॥

हे अनुपचितसुकृतसंचय! हे हृदय! तव किं आकुलीभावः?। [न] उपचितोऽनुपचितः। सुकृतस्य पुण्यस्य संचयः संग्रहः सुकृतसंचयः। अनुपचितोऽपूर्णः सुकृतसंचयो यस्य स तस्य संबोधनम्। यदि चेत् सत्पुरुषा धनिनः सन्ति यदि च परकलत्राणि सुरूपाणि दृश्यन्ते तदा तव कः खेद इति॥ ९८॥

चन्दनस्वरूपेण सत्पुरुषदानस्वरूपमाह—

११. यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः।
निजवपुषैव परेषां तथापि संतापमपनयति॥ ९९॥

इह कविसमये चन्दनतरुषु विद्यमानानि फलकुसुमानि काव्ये बुधो न बध्नीयात्। यदुक्तम्—
"चंदणतरु व्व सुयणा फलरहिआ जइवि निम्मिआ विहिणा।
तहवि कुणंतुवयारं लोयाणं नियसरीरेण॥" इति।

यद्यपि विधिना चन्दनविटपी श्रीखण्डवृक्षः फलकुसुमरहितः कृत। तथापि निजशरीरेण-अन्येषां जन्तूनां संतापं खेदं अपनयत्येव स्फेटयत्येव। तथा निरवस्थोऽपि सत्पुरुषः स्वदेहेनोपकारं करोत्येव। अन्योक्तिरलंकारः॥ ९९॥

महत्सेवाफलमाह—

१२. परिचरितव्याः सन्तो यद्यपि कथयन्ति नैवमुपदेशम्।
यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि॥ १००॥

पुरुषेण तदपि सन्तो महान्तः सेव्या यद्यप्युपदेशं शिष्या(क्षां) न कथयन्त्येव। तेषां महतां याः स्वेच्छया कथा या स्वभावेन वार्ताः चेष्टास्ता अन्येषामज्ञानिनामेवं निश्चितं शास्त्राणि शिष्या(क्षा)रूपाणि भवन्ति॥ १००॥

---

## (२) शृंगारशतकगतानि अधिकपद्यानि।

अथ शृंगारशते त्यक्तकाव्यानां टीका लिख्यते।

शृंगारो द्विविधो रसः। एकः संयोगो द्वितीयो वियोगश्च। अत्र संयोगमाह—

१. मत्तेभकुम्भपरिणाहितकुङ्कुमार्द्रे
कान्तापयोधरतटे रतिखेदखिन्नः।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षि(क्ष)पां क्षपयति क्षणलु(ल)ब्धनिद्रः॥ १९॥

धन्यो ना क्षि(क्ष)पा निशा [क्षपयति] गमयति । किं कृत्वा? । कान्तापयोधरतटे कामिनीकुचदेशे वक्षो हृदयं निधाय धृत्वा । कथंभूते पयोधरतटे? । [मत्तेकुम्भपरिणाहितकुङ्कुमार्द्रे] मत्तेभकुम्भवत् परिणाहितं विशालं उन्नतं च तत्, कुङ्कुमेन आर्द्रं क्लिन्नं लिप्तं वा तत् कुङ्कुमार्द्रं च तस्मिन् । कथंभूतो धन्यः? । [रतिखेदखिन्नः] रतिः संभोगस्तस्माद् यः खेदस्तेन खिन्नः श्रान्तः । पुनः कथंभूतः? । भुजपञ्जरमध्यवर्ती भुजयोः पञ्जरं भुजपञ्जरं भुजपञ्जरस्य मध्यं भुजपञ्जरमध्यं तस्मिन् वर्तितुं शीलमस्येति भुजपञ्जरमध्यवर्ती । कान्ताभुजाश्लिष्ट इत्यर्थः । पुनः कथंभूतः? । क्षणलब्धनिद्रः क्षणं लब्धा निद्रा येन सः ॥ १८ ॥

इदानीं कान्तानयनचपलत्वस्वरूपं निरूपयति—

२. इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचौरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरशबरबाणव्यतिकर-
ज्वरज्वाला शान्ता तदपि न वराकी विरमति ॥ १९ ॥

इयं प्रत्यक्षा बाला मां प्रति अनवरतं निरन्तरं चक्षुः क्षिपति चक्षुःक्षेपं कुरुते । तर्हि अनया किमभिप्रेतं किं वाञ्छितं प्राप्तम्? । न किंचित् प्राप्तमित्यर्थः । किंभूतं चक्षुः? । इन्दीवरदलप्रभाचौरं इन्दीवरस्य दलानि तेषां प्रभा तां चोरयतीति तत् कविरूढित्वाच्चौरम् । यतोऽस्माकं मोहो गतो निवृत्तः । तथा स्मरशबरबाणव्यतिकरज्वरज्वाला शान्ता उपशमिता । स्मर एव शबरो भिल्लस्तस्य बाणास्तेषां व्यतिकरात् ज्वरस्तस्य ज्वाला शान्ता । तदपि वराकी मुग्धा न विरमति । इदानीं वयं योगिनः इयं न जानाति । अस्मान् प्रति दृष्टिं दत्ते इति भावः ॥ १९ ॥

यौवनस्वरूपं निवेदयति—

३. रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतुं(तुः)
मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।
कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन् न ह्यनर्थव्रजकुलभवनं यौवनादन्यदस्ति ॥ ४१ ॥

हि निश्चितम् । अस्मिन् लोके यौवनादन्यदनर्थव्रजकुलभवनं नास्ति । यौवनमेवानर्थकुलभवनम् । अनर्थानां व्रजः समूहस्तस्य कुलं तस्य भवनं गृहम् । अर्थवशाद् विभक्तिपरिणामः । कथंभूतं यौवनम्? । रागस्यैकमद्वितीयमगारं धाम । पुनः कीदृग् यौवनम्? । नरकशतमहादुःखसंप्राप्तिहेतुम्(तुः) । महान्ति च दुःखानि शतसंख्यानि महादुःखानि । नरकेषु शतमहादुःखानि नरकशतमहादुःखानि तेषां संप्राप्तिस्तस्या हेतुः (तुः) । पुनः कथंभूतं यौवनम्? । मोहस्य मौढ्यस्योत्पत्तिबीजम् । यतो बीजादुत्पत्तिः सर्वस्य वस्तुनः । पुनः कथंभूतम्? । ज्ञानताराधिपस्य चन्द्रस्याच्छादने जलधरपटलं मेघवृन्दम् । पुनः किं लक्षणम्? । कन्दर्पस्यैकमित्रम् ।

पुनः कथंभूतं यौवनम् ?। प्रकटितविविधस्पष्टदोषप्रबन्धं प्रकटितो विविधस्पष्टदोषाणां प्रबन्धो येन तत्। एवंविधं यौवनं वर्तते ॥ ४१ ॥

अथ ज्ञानस्य पुरुषमाश्रित्य गुणदोषस्वरूपमाह—

४. ज्ञानं सतां मानमदादिनाशनं केषां चिदेतन्मदमानकारणम्।
स्थानं विविक्तं यमिनां विमुक्तये कामातुराणामपि कामकारणम् ॥७७॥

सतां सत्पुरुषाणां ज्ञानं मानमदादिनाशनं भवति। यतः सत्पुरुषे ज्ञानं प्रधानं स्यात्। केषां चित् पुरुषाणां एतत् ज्ञानं मदमानकारणं भवति। [विविक्तं स्थानं यमिनां विमुक्तये भवेत्।] कामातुराणामपि तत् कामकारणं भवेत्। यादृशः पुमांस्तादृशं ज्ञानं प्रतिभासति(?ते) ॥ ७७ ॥

अथ दानवीररसमाह—

५. कियती पञ्चसहस्री कियती लक्षाऽथ कोटिरपि कियती।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ ७८ ॥

पञ्चानां सहस्राणां समाहारः पञ्चसहस्री दाने कियती कियन्मात्रा। अथ वा लक्षाश्च (?क्षा च) कियती। कियती लिङ्गं न व्यभिचरति। अन्यथा कियन्तो लक्षाः एवं स्यात् (?)। एवं कोटिरपि कियती। औदार्योन्नतमसां औदार्येण उन्नतं उच्चं मनो येषां ते औदार्योन्नतमनसस्तेषां रत्नवती वसुमती रत्नपूर्णा पृथिवी कियती कियन्मात्रा ॥ ७८ ॥

अथ वैराग्य-शृङ्गारैक्यस्वरूपमाह—

६. आवासः क्रियतां गाङ्गे पापवारिणि वारिणि।
स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ७९ ॥

गाङ्गे वारिण्यावासः क्रियताम्। कथंभूते वारिणि ?। पापवारिणि पापं वारयतीत्येवंशीलं पापवारि तस्मिन् पापवारिणि। वा अथ वा तरुण्याः स्तनमध्ये आवासः क्रियताम्। कथंभूते स्तनमध्ये ?। मनोहारिणि। पुनः कथंभूते ?। हारिणि हारो विद्यते यस्मिंस्तत् हारि तस्मिन् हारिणि ॥ ९४ ॥

भार्यार्ययोः समानस्वरूपमाह—

७. सरसा सुपदन्यासा सालङ्कारा सुवर्णमयमूर्तिः।
आर्या तथा च भार्या न लभ्यते पुण्यहीनेन ॥ १०१ ॥

भार्या च पुनः तथा आर्या पुण्यहीनेन मनुष्येण न लभ्यते न प्राप्यते। कथंभूता भार्या ?। रसेन रागेण सह वर्तमाना सरसा। क ?। भर्तरि। कीदृशी आर्या ?। सरसा शृङ्गारादिरसोपेता विदुषि। किंभूता भार्या ?। सुपदन्यासा सुचरणा। आर्यापि शोभनपदा। किंभूता भार्या ?। सालङ्कारा हारादिभूषणयुता। आर्या अलंकारयुक्ता चित्राद्यलंकृतिसंपन्ना। पुनः

कथंभूता भार्या ? । सुवर्णमयमूर्तिः सुवर्णवर्णा कनकनिमा । आर्यापि शोभनाक्षरवन्धा । एवं-विधगुणवती भार्या त्वार्या च कार्या ॥ १०१ ॥

योषितां चञ्चलस्वरूपमाह–

८. जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ५० ॥

योषितः अन्येन पुरुषेण सार्धं जल्पन्ति सभाषणं कुर्वन्ति । ता सविभ्रमाः सविलासाः सत्यः अन्यं नरं पश्यन्ति प्रेमदृष्ट्या विलोकयन्ति । [हृद्गतं] हृदयस्थं अन्यं वल्लभं चिन्तयन्ति स्मरन्ति । इति कारणात् । नाम इति निर्धारणे । योषितां नारीणां कः प्रियो वल्लभः स्यात् । न कोऽपि । यदुक्तं अन्ये–

"सरसलिलसिलीमुहदिणयरस्स तणुजीयहययवयणाइ ।
चिंहु रमइ चउरलच्छी मणमाणइ रायहंसस्स " ॥ ५७ ॥

अथ वसन्तवर्णनं कविराह–

९. सहकारकुसुमकेसरनिकरभरामोदमूर्च्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेत् कस्य नोत्कण्ठा ॥ ५८ ॥

मधौ वसन्ते कस्योत्कण्ठा न भवेत् । सर्वस्यापि भवेत् । [कीदृशे मधौ ?] । सहकारस्य कुसुमानि तेषां केसराणि तेषां निकरस्तस्य भारस्तस्यामोदस्तेन मूर्च्छितो दिगन्तो यत्र तस्मिन् । पुनः कथंभूते ? । मधुरं च तन्मधु च मधुरमधु तस्मिन् विधुरा मधुपा यत्र तस्मिन् ॥ ५८ ॥

जरास्वरूपमाह–

१०. यातं यौवनमधुना वनमधुना शरणमेवमस्माकम् ।
स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥ ९८ ॥

अधुना इदानीं यौवनमधुना यातं गतम् । यूनो भावो यौवनम् । यौवनमेव- मधु यौवनमधु तेन । यौवनमदेनेत्यर्थ । मधु मद उच्यते । अत अस्माकं वनमेव शरणम् । हा इति खेदे । रमणीनां नारीणां कालः समयो गतः । किंभूताना स्त्रीणाम् ? । स्फुरदुरुहारमणीनां स्फुरन्त उरवो हारा मणयो यासां ता तासां स्फुरदुरुहारमणीनाम् ॥ ९८ ॥

विषयाणां विषय( [१] विष )स्वरूपमाह–

११. विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ ९९ ॥

विषस्य च पुनर्विषयाणां अत्यन्तं अत्यर्थं दूरं अतिशयेनान्तरं भेदः आधिक्यम् । विषं [१] विषया' क [२] । एतेन विषात् विषया बहुलतरमधिकाः । केन प्रकारेण ? । विषं उपयुक्तं भुक्तं सत् हन्ति । विषयाः स्मरणादपि घ्नन्ति ॥ ९९ ॥

इदानीमिन्द्रियदुर्जयत्वमाह—

१२. विश्वामित्र-परासरप्रभृतयो ये चाम्बुपर्णाशनास्
तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवास्
तेषामिन्द्रियनिग्रहः कथमहो दम्भैर्जगद् वञ्च्यते ॥ १०० ॥

विश्वामित्र-परासराद्यो ये मुनीन्द्रास्तेऽपि मनोहरं स्त्रीमुखकमलं दृष्ट्वा मोहं कामविकारं प्राप्ताः । एतेन स्त्रीसङ्गाद् विश्वामित्रादयः पतिताः । किंलक्षणास्ते ? । अम्बुपत्रभोजिनोऽपि । [पुनः] पयोदधिघृतं सघृतं आहारं ये मानवा भुञ्जन्ति तेषामिन्द्रियनिग्रहः कथं स्यात् । एतेन बलिष्ठाहारिणां कथमिन्द्रियजयो भवति । अहो इति खेदे । जगद् विश्व दम्भैः कपटैर्वञ्च्यते विप्रतार्यते । विश्वामित्रश्च परासरश्च विश्वामित्र-परासरौ तौ प्रभृतिः आदिर्येषां ते ॥ १०० ॥

न चायमेकान्तवादः । आहारो न कारणम् । किं तु स्वसामर्थ्यमेव । तन्निरूपयति—

१३. सिंहो बली द्विरद-शूकरमांसभोजी
संवत्सरेण रतिमेति किलैकवारम् ।
पारापतः खरशिलाकणभोजनोऽपि
कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥ १०१ ॥

सिंहो बली बलिष्ठः । कथंभूतः ? । द्विरदश्च शूकरश्च द्विरद-शूकरौ तयोर्मांसं भुञ्जती-(?भुनक्ती)ति द्विरदशूकरमांसभोजी । किलेति सत्ये । सः संवत्सरेण एकवारं रतिं प्रति संभोगं प्रति याति । कामं सेवते । खराश्च ते शिलाकणाश्च तान् भुञ्जती(?भुनक्ती)ति खरशिला-कणभोजनोऽपि पारापतः अनुदिनं दिनं दिनं प्रति कामी भवति कामाकुलः स्यात् । हे प्रतिवादिन् ! त्वं वद अत्राहारस्य को हेतुः किं कारणम् ? । एतेन आहारो न विषयहेतुः । पारापतादीनामाहारनैरस्यं बहुकामित्वं च सिंहादीनां बलिष्ठाहारत्वमल्पकामित्वं ज्ञेयम् ॥ १०१ ॥

## ( ३ ) वैराग्यशतकगतानि अधिकपद्यानि ।

अथ वैराग्यशतटीकायां त्यक्तकाव्यानां टीका लिख्यते ।

अन्यजनदोषेण दूषितं स्वेपमाह—

१. सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत् पयोधरयुगं धत्ते सखेदा वयम् ।
साऽऽक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ १ ॥

अन्यजनाश्रितैर्दोषैर्वयमपटवो जाताः स्म इत्यद्भुतमाश्चर्यम्। यस्य दोषो भवति स एवापटुर्भवति। अत्र तु दोषस्तस्या वय अपटव पीडिता। कथम्? । सा बाला वयमप्रगल्भमनसः। अप्रगल्भ अधैर्यं मनो येषा ते अप्रगल्भमनस इत्यनेन दोषस्तस्या। पुन सा स्त्री वयं कातराः कामवैक्लव्यात्। या स्त्री सैव कातरा भवितु युक्ता। सा पीनोन्नतिमत् पयोधरयुग [कुच]कुम्भयुगल धत्ते वयं सखेदाः श्रमयुक्ता। श्लेष—या कुम्भयुग दधाति श्रमस्तस्या एव भवति। सा गुरुणा जघनस्थलेन नितम्बेन आक्रान्ता। वयं गन्तुं न शक्ताः तदवलोकनरसात्। श्लेषश्चात्र— यो ह्याक्रान्तो भवति स एव गन्तु न शक्नोति। अतो दोषैरन्यजनाश्रितैर्वयं पाटव त्याज्यि(?जि) ता। श्लेषालकार ॥ १ ॥

उपमालकारेण स्मरबल दीपयति—

२. स्तनशैलसन्निधाने त्रिवलिनदीतीरकोटरे तन्व्याः।
जगदपि नग्नीविहितं तथापि पञ्चेषुचौरेण ॥ २ ॥

तथापि पञ्चेषुचौरेण स्मरतस्करेण जगदपि विश्वमपि नग्नीविहितम् अनग्न नग्न इति नग्नीकरणम्। तथापीति कथम्?। तन्व्याः स्तनशैलसन्निधाने स्तनपर्वतसमीपे। पर्वधाने चौरो ,,लगति। [ त्रिवलिनदीतीरकोटरे ] त्रिवली उदररेखा सैव नदी तस्यास्तीकोटर गहन तत्र। अन्यचौरस्थानमपीदृक् भवति॥ २ ॥

अथात्मनिन्दास्वरूपमुपदेशत आह—

३. क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवातुतपनक्लेशा न तप्तं तपः।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं
तत्तत् कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः॥ १५ ॥

मुनिभिस्तापसैर्यदेव यत् कर्म कृतं तदेव अस्माभि कृतम्। पुन तैस्तैः फलैर्वञ्चिताः वयम्। फल न प्राप्तम्। कथम्?। क्षमया न क्षान्तम्। क्षमाप्रधानतया परेषा किंचित् कृत विरूपादि न क्षान्त न क्षमितम्। मुनिभि क्षमया क्षम्यते इति। गृहोचितसुखं संतोषतो न त्यक्तम्। अप्राप्तिवशात् त्यक्तम्। तत् मुनिभि सतोषेण त्यज्यते। दुःसहशीतवातुतपनक्लेशाः सोढाः। दुःसहा ये शीतवायुसूर्यतापक्लेशा [ते] क्षमिता। पर तपो न तप्तं तप शुद्ध न कृतम्। अहर्निशं नियमितैः प्राणैर्नियमयुक्तैः प्राणैर्नित्यं धन ध्यातं पर शंभोः पदं न ध्यातम्। सनियमानां वित्तध्यानेन किं प्रयोजन चेन्महेश्वरपद न स्मर्यते। अत एव मुनिभिर्यदेव क्रियते अस्माभिस्तत् कर्म कृत येन वय पुण्यफलैर्वञ्चिता। किमपि फल नाप्तम्। कायक्लेश एव संजात विपरीतभावत्वात्॥ १५ ॥

अथ मनुष्यजन्मफलरूपमाह—

४. नो खड्गेन विदारिताः करिघटा नोद्वेजिता वैरिणस्

तन्वङ्ग्या विपुले नितम्बकटके नो क्रीडितं लीलया।

नो जुष्टं गिरिराजनिर्झरझरे झाङ्कारि गङ्गापयो

मातुर्यौवनहारिणा वद सखे जातेन तेनापि किम् ॥ १६ ॥

हे सखे ! त्वं वद। तेन पुंसा जातेन किम् ?। न किमपीत्यर्थः। तेन कथंभूतेन ?। मातुर्यौवनहारिणा मातृयौवनचौरेण। तेन केन ?। येन खड्गेन करिघटा न विदारिताः। वैरिणो नोद्वेजिता न पराभूताः। अनेन शौर्यगुणो दर्शितः। तन्वङ्ग्या विपुले नितम्बकटके विशाले कटीतटप्रदेशे नितम्बस्थले लीलया नो क्रीडितम्। अनेन कामस्वरूपः शृङ्गारो दर्शितः। येन गङ्गापयो नो जुष्टं नो प्रीत्या सेवितम्। कस्मिन् ?। गिरिराजनिर्झरझरे गिरिराजो हिमाचलः तस्य निर्झराणां झरो ह्रदः तस्मिन्। अनेन धर्मः सूचितः। येनार्थत्रयं न साधितं स पुमान् मातृयौवनहारी मातुः क्लेशकारकः ॥ १६ ॥

अथोपशमक्षमास्वरूपं प्रतिपादयति—

५. ददतु ददतु गालीर्गालिव(म)न्तो भवन्तो

वयमपि तदभावाद् गालिदानेऽप्यशक्ताः।

जगति विदितमेतद् दीयते विद्यमानं

ददतु शशविषाणं ये महात्यागिनोऽपि ॥ २ ॥

भवन्तो गालीः कर्मतापन्ना ददतु ददतु। भवन्तो गालिव(म)न्तो गालिमन्तः। अपि निश्चितं वयं गालिदाने अशक्ताः असमर्थाः। कुतः ?। तदभावात् गाल्यभावात्। जगति विश्वे एतद् विदितं ज्ञातम्। यद् विद्यमानं दीयते। ये महात्यागिनोऽपि शशविषाणं शशशृङ्गं ददतु। परमविद्यमानं कथं ददतु ॥ २ ॥

अथ भिक्षुस्वरूपमाह श्लोकद्वयेन—

६. ग्रामे ग्रामे कुटी शून्या भैक्ष्यमन्नं गृहे गृहे।

मार्गे मार्गे जरद् वस्त्रं वृथा दैन्यं नृपे नृपे ॥ ३ ॥

ग्रामे ग्रामे शून्या कुटी। भैक्ष्यं (?क्ष) भिक्षाया भवम् अन्नं गृहे गृहे विद्यते। मार्गे मार्गे जरत् जीर्णं वस्त्रमस्ति। नृपे नृपे राज्ञि राज्ञि कथं वृथा दैन्यं करोषि ॥ ३ ॥

तदे(?मे)वार्थं वदति—

७. भुञ्जीमहि वयं भैक्ष्यं रथ्यावासं वसीमहि।

शयीमहि महीपीठे कुर्वीमहि किमीश्वरैः ॥ १ ॥

वयं भैक्ष्यं भुंजीमहि । भिक्षाया भव भैक्षमन्न इत्यर्थ । रथ्यावासं वसीमहि रथ्या रथवाहा मार्गा, रथ्याया वास त वसीमहि । महीपीठे शयीमहि शयन कुर्म । अनेन गृहवास सूचित । तत ईश्वरैर्धनिभि सार्धं किं प्रयोजनम् । तेभ्यो वयमधिकतरा ॥ १ ॥

अथात्मज्ञानस्वरूप प्रतिपादयन्नाह—

८. भो मर्त्याः शृणुत स्फुटाक्षरमिदं वाक्यं शिवावासये,
सन्तः क्रीडनमिन्द्रियैः सुखलवप्राप्त्यर्थमभ्युद्युताः ।
संसारे तृणभङ्गभङ्गुरतरे लभ्यं न वाऽऽत्यन्तिकं
स्वात्मन्यस्ति समाधिनिर्मितसुखं यत् तत् स्वयं चिन्त्यताम् ॥८७॥

भो मर्त्याः ! मन्तः साधर स्फुटाक्षर व्यक्ताक्षर लभ्यं न वात्यन्तिकं स्वात्मन्यस्ति समाधिनिर्मितसुखं यथा स्यात्तथा क्रीडनं इदं वाक्यं शृणुत । किमर्थम् ? । शिवावासये ईश्वरप्राप्त्यर्थम् । कथभूता सन्त ? । इन्द्रियैः सुखलवप्राप्त्यर्थं अभ्युद्युताः । इन्द्रियसुखेन कथमीश्वरप्राप्तिर्भवति ? । संसारे च पुन आत्यन्तिक पदार्थं लभ्य नास्ति । कथभूते संसारे ? । तृणभङ्गभङ्गुरतरे तृणवद् भङ्गुरशीले । अत कारणात् स्वात्मनि समाधिविनिर्मित यत् सुखं वर्तते तच्चिन्त्यताम् । आत्मनि परब्रह्मस्वरूप चिन्त्यताम् । परब्रह्मस्वरूपा(पचिन्तना)दीश्वरप्राप्तिर्भवति न चेन्द्रियसुखात् किंचिदवाप्तिर्भवति इत्यर्थ ॥ ८७ ॥

अथ योगीन्द्रस्वरूपमाह—

९. अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥ ८९ ॥

मम दिवसाः अहौ सर्पे वा अथ वा हारे मुक्तावल्या वा समदृशो यान्तु । समे सदृशे (? दृशौ) दृशौ दृष्टि(ष्टी) यस्य स तस्य । बलवति रिपौ वा अथ वा सुहृदि समदृशो यान्तु । मणौ रत्ने वा लोष्टे कर्करे समा यान्तु । कुसुमशयने वा अथवा दृषदि शिलाया समा यान्तु । तृणे अथ वा स्त्रैणे स्त्रीणा भाव समूहो वा स्त्रैण तस्मिन् समा यान्तु । कथभूतस्य मम ? । क्वचित् पुण्यारण्ये पवित्राटव्या शिव शिव शिवेति प्रलपतो मम ॥ ८९ ॥

अथ विद्यावर्णनस्वरूपमाह—

१०. विद्या काचित् स्फुरति महती भास्वती चेतसाऽन्तर्
यन्माहात्म्यात् तृणवदियतीं मन्यते यत् त्रिलोकीम् ।

किं तेषां स्याद् द्रविणकणिकालेशमात्रे स्पृहाऽसौ
या दैन्यस्य प्रथयति चयं राजराजे मुहूर्तम् ॥ १० ॥

अन्तश्चेतसि काचित् अनिर्वचनीया महती विद्या तत्त्वज्ञानरूपा स्फुरति जागर्ति । कथंभूता विद्या ? । भास्वती प्रभायुक्ता महिमावती स्यात् । यन्माहात्म्यात् यस्या माहात्म्यं यन्माहात्म्यं तस्मात् विद्यानुभावतः । इयतीं त्रिलोकीं तृणवन्मन्यते त्रिलोकीं तृणसमां पश्यति । परब्रह्मवतः सर्वं जगत् तृणतुल्यम् । तेषां योगिनां द्रविणकणिकालेशमात्रे किमसौ स्पृहा वाञ्छा स्यात् । न कापि स्पृहा भवेत् । द्रविणस्य कणिका तस्या लेशमात्रं द्रविण० तस्मिन् । या धनस्पृहा राजराजे धनदेऽपि मुहूर्तं यावद् दैन्यस्य चयं प्रथयति विस्तारयति । कोऽर्थः ? । धनदेऽपि धनवाञ्छा न क्षीणास्ति । सोऽपि धनाय स्पृहयति । तत. परब्रह्मरूपा विद्यैव श्रेष्ठा ॥ १० ॥

आत्मनिन्दास्वरूपं लोभपरिहारेणाह–

११. नो चिन्तामणयो न कल्पतरवो नाष्टौ महासिद्धयस्
तावद्देहवशाः परोपकृतयो नास्माभिरप्यर्जिताः ।
नेदं मज्जति मानसं च चपलं ब्रह्मामृताम्भोनिधौ
धिग् धिक् कर्मकुटीमिमां तदपि न त्यक्तुं वयं शक्नुमः ॥१४॥

अस्माभिश्चिन्तामणयो नो अर्जिताः कल्पतरवो नार्जिता. । अष्टौ महासिद्धयोऽपि न अर्जिताः । तावत् प्रथमं परोपकृतयो न कृता. । कथंभूता परोपकृतयः ? । देहवशाः देहाधीनाः । देहेन परोपकृतयो भवन्ति ता अपि न कृता । च पुनरिदं मानसं चपलं ब्रह्मामृताम्भोनिधौ ज्ञानसुधार्णवे न मज्जति । तस्मात् इमां कर्मकुटीं धिक् [ धिक् ] । तदपि वयं इमां त्यक्तुं न शक्नुमः न समर्थाः । अनेन देहेन महासिद्ध्युत्पादन न जायते, देहोऽपि त्यक्तुं न शक्यः । अनेनेहलोकः परलोकश्च न साध्यते ॥ १४ ॥

पुनरपि ज्ञानस्वरूपोपदेशमाह–

१२. आघ्राय पुस्तकं धन्याः सर्वं विद्म इति स्थिताः ।
शतकृत्वोऽपि शृण्वन्तो हा न विद्मो जडा वयम् ॥ १५ ॥

ये पण्डिता एवंविधास्त एव धन्याः । ये पुस्तकं आघ्राय गन्धवद् गृहीत्वा सर्वं विद्म इति कृत्वा स्थिताः । वयं शतकृत्वोऽपि शतवारानपि शृण्वन्तोऽपि न विद्मो न जानीमोऽत एव जडाः । अनेन स्वनिन्दा ॥ १५ ॥

अथ मृगोपदेशेन सज्जनस्वरूपं वर्णयन्नाह–

१३. सारं सारङ्ग रङ्गत्तरुणतृणशिखाखण्डखादेन खेदं
क्षीणं पी(?नी)त्वा सलीलं सलिलमनु पिबेद् योषिता पीतशेषम्

धन्यस्त्वं यद् वनान्ते गमयसि समयं दारुणं द्रव्यगर्व-
प्रध्मातोद्दर्वग्रभुग्रहिलखरखलक्ष्मापवक्त्राण्यपश्यन् ॥ १६ ॥

हे सारङ्ग मृग ! त्वं धन्यो यद् यस्मात् कारणात् त्वं वनान्ते दारुणं समयं गमयसि। त्वं किं कुर्वन् ? । द्रव्यगर्वप्रध्मातोद्दर्वग्रभुग्रहिलखरखलक्ष्मापवक्त्राण्यपश्यन् । द्रव्यगर्वेण प्रध्माताः शब्दायमानाः पूत्करणशीलाः उद्दर्वा अध्वनो ग्रहिलाः खराश्चण्डा ये खलाः क्ष्मापाला राजानस्तेषां मुखान्यपश्यन्। किं कृत्वा ? । सारं यथा भवति तथा रङ्गत्तरङ्ग(? रुण)तृणशिखा-खण्डखादेन क्षौधं खेदं नीत्वा । रङ्गन्ति च तानि च तरुणानि तृणानि च तेषां शिखास्ता एव खण्डखादः खण्डभक्षणं तेन क्षौधं क्षुधायां भवः क्षौधस्तं खेदं नीत्वा । यो पोपिता पीतशेषं सलीलं यथा स्यात्तथा सलिलमनु पश्चात् पिबेत्। अनेन मृगोऽपि धन्यो यः स्वेच्छया तृणादिक-मपि प्रियाधुतः पानीयं पिबति मूर्खगर्वितनृपवक्त्राणि अपश्यन्। स एव श्रेष्ठः स्वेच्छाचारी। तस्मान्मनुजानां जन्म निःफलं यः पराधीनवृत्तिः ॥ १६ ॥

अथान्योक्त्या मृगाणां स्तुतिरूपमाह—

१४. यद् वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ १७ ॥

हे कुरङ्ग ! मे मम तत् ब्रूहि । भवता त्वया । नाम इति कोमलामन्त्रणे । कुत्र कस्मिन् स्थाने तपस्तप्तम् । तत् किम् ? । यद् धनिनां वक्त्रं मुहुर्वारं वारं न ईक्षसे । मृषा चाटुं न ब्रूषे । एषां धनिनां गर्वयुक्ता गिरो न शृणोषि । पुनः प्रत्याशया वाञ्छया न धावसि । काले बालतृणानि खादसि भक्षसि । निद्रागमे सुखं निद्रासि । अनेन मृगावतारोऽपि धन्यो, मनुष्यजन्म न धन्यः (? न्यम्) ॥ १७ ॥

अथ निरर्थकजीवनं निन्दन् तत्स्वरूपमाह—

१५. धिक् किंजीवनमापदेकनिलयं पित्राप्तबन्धूज्झितं
दीनानाथजनोपकारकरणव्यापारदूरीकृतम् ।
मन्दीभूतशशाङ्कशेखरपदद्वन्द्वारविन्दस्मृतिर्
व्यालोलायतलोचनास्तनतटप्रश्लेषविश्लेषितम् ॥ १८ ॥

किंजीवनं धिक् । धिक् योगे द्वितीया । कुत्सितं जीवनं किंजीवनम् । कथंभूतं किंजी(?जी)-वनम् ? । आपदेकनिलयं आपदां एकं केवलं निलयं गृहं तत् । पुनः कीदृक् यौ(?किंजी)वनम् ? । पित्राप्तबन्धूज्झितं पिता च आप्तश्च बन्धुश्च ते, तैरुज्झितं त्यक्तम् । एवंविधं जन्मान्धस्वरूपम् । पुनः

कथंभूतं किंयौ(?जी)वनम् ? । दीनानाथजनोपकारकरणव्यापारदूरीकृतं तद्रहितम् । पुनः कथंभूतम् ? । मन्दीभूतशशाङ्कशेखरपदद्वन्द्वारविन्दस्य स्मृतिर्यत्र तत् । पुनः किंभूतं किंजीवनम् ? । व्यालोलायतलोचनायाः स्तनतटं तस्य प्रश्लेषः आलिङ्गितं तेन विश्लेषितं दूरीकृतम् । अनेन धर्मार्थकामरहितम् ॥ १८ ॥

अथ जरानिन्दामाह–

१६. वर्णं सितं झटिति वीक्ष्य शिरोरुहाणां
स्थानं परं परिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १८ ॥

तरुण्यो नार्यः शिरोरुहाणां केशानां सितं वर्णं वीक्ष्य दूरतरं यान्ति तस्मात् । कथम् ? । झटिति शीघ्रम् । पुंसां तदेव केशश्वेतवर्णमेव परिभवस्य परं पदं परं स्थानम् । तं कमिव ? । चाण्डालकूपमिव । कथंभूतं चाण्डालकूपम् ? । आरोपितास्थिशकलं आरोपितान्यस्थिशकलानि यत्र स तम् । यथा अस्थियुक्तं कूपं वीक्ष्य नार्यस्तं परिहृत्य दूरतरं यान्तीत्यर्थः । तद्वत् स्थविरं दृष्ट्वा नार्यो दूरं यान्तीत्यर्थः ॥ १८ ॥

अथ संसारनिन्दास्वरूपं कथयन्नाह–

१७. गर्भावासे शयित्वा कलिमलनिलये पूतिमध्ये जघन्ये
स्त्रीकुक्षौ पीडिताङ्गः कथमपि विवरान्निर्गतः क्लेदलिप्तः ।
भूयस्तत्रैव रागप्रकृतिरिह नरो मन्दबुद्धिर्दुरात्मा
सोऽयं संसारचक्रे भ्रमति शठमये लोकमध्ये यथान्धः ॥ १९ ॥

इह मनुजभवे मन्दबुद्धिर्नरो दुरात्मा सोऽयं भूयः पुनरपि तत्रैव जन्मस्थाने रागप्रकृतिः वर्तते । केन कुत्रेव ? । यो (? यत्र) गर्भावासे शयित्वा कथमपि महता कष्टेन विवरात् योनियन्त्रान्निर्गतः निसृतः । कथंभूते गर्भावासे ? । कलिमलनिलये कलिमलं जंबालं कर्दमस्वरूपं तस्य निलये गृहे । पुनः किंभूते गर्भावासे ? । पूतिमध्ये पूतिः रुधिरविकृतिर्मध्ये यस्य सः तत्र । पुनः कीदृशे गर्भावासे ? । जघन्ये सर्वार्थनिन्दास्पदे । कथंभूतो नरः ? । स्त्रीकुक्षौ पीडिताङ्गः पीडितं अङ्गं यस्य सः । पुनः क्लेदलिप्तः क्लेद उदररसस्तेन लिप्त. । एवंविधदुःखान्निर्गतः प्राणी भूयः पुनरपि स्त्रीजघने रज्यते । अतः अन्धत्वेनोपमीयते । यथान्धः शठमये शठस्वरूपसंसारे लोकमध्ये भ्रमति । तथा कामान्धो जीवः संसारचक्रे भ्रमति । शठा अन्धं हसन्ति तथा संसारे कामी हस्यते ॥ १९ ॥

अथ यौवनरहितानां कामनैरस्यमाह–

१८. एते ते दिवसास्त एव तरवस्ताश्च प्रगल्भाः स्त्रियस्
तत्रैवाम्रवनं स कोकिलरवः सोऽयं वसन्तोत्सवः ।

वातः सोऽपि च दक्षिणो धृतिकरः सेयं सचन्द्रा निशा
हा तारुण्य विना त्वयाऽद्य सकलं पालालपूलायते ॥ २० ॥

हे तारुण्य तरुणभाव ! त्वया विनाऽद्य जरावस्थायां वसन्तसमये सकलं समग्रं पालालपूलायते शुष्कतृणपुंजायते । यथा पालालपूलको निबन्धोऽदृढस्तथा यौवनमन्तरे[ण] न किंचित् सुखमनुभूयते। कथम्?। तदेवाह। एते ते दिवसाः। दिवसानां न भिन्नता। तरवश्चम्पकबकुलजातीकुन्दमचकुन्दाद्यास्त एव नान्यथा। चापरम्। ताः स्त्रियः प्रगल्भाः सुरतोपक्रमनिपुणाः। च पुनराम्रवनं तदेव। कोकिलरवो वसन्तोत्सवः स एव। सोऽपि दक्षिणो धृतिकरो वातः। दक्षिणो दक्षिणदिग्भवः। धृतिः संतोषस्तं करोतीति धृतिकरः। सेयं सचन्द्रा रात्रिश्चान्द्री रात्रिः। तथापि तारुण्यं विना सर्वं पलालपूलीयवन्निरर्थकमित्यर्थः। तारुण्यदर्पोद्ध(द्धु)राणां सर्वं मन्मथजनकं न तु वृद्धानाम् ॥ २० ॥

मूर्खाणां तत्त्वज्ञानं न भवति तत्स्वरूपं निरूपयति—

१९. विच्छिद्रं करकर्परं पथि गतं मूर्खैर्जडैर्धिक्कृतं
विप्रैस्तत्त्वविचिन्तकैर्नमसितं स्वात्मप्रबोधैर्नुतम् ।
नृत्यन्तं च दिगम्बरं च जटिलं बालैश्च मुक्तं जडं
डिम्भाश्चोपहसन्ति चत्वरपथे दत्त्वा मुहुः स्फाटिकाम् ॥ २१ ॥

दिगम्बरं नृत्यन्तं प्रति डिम्भाः बालाः स्फाटिकां तालिकां दत्त्वा हसन्ति। कस्मिन्?। चत्वरपथे। कथम्?। मुहुः वारं वारम्। कथंभूतं दिगम्बरम्?। विच्छिद्रं वेदनं वित् तत्र निष्ठं विच्छिद्रं ज्ञानरूपम्। करकर्परं करे कर्परं मृद्भाण्डं यस्यासौ करकर्परस्तम्। पुनः कथंभूतम्?। पथि गतं मार्गस्थम्। पुनः कथंभूतम्?। मूर्खैर्जनैर्धिक्कृतम्। पुनः किंभूतम्?। तत्त्वविचिन्तकैर्विप्रैर्नमसितं नमस्कृतम्। पुनः कीदृशम्?। स्वात्मप्रबोधैर्नुतं स्तुतम्। 'णु स्तुतौ' विति वचनात्। पुनः कीदृशम्?। जटिलं जटायुक्तम्। पुनः कथंभूतम्?। बालैश्चैर्मुक्तं त्यक्तम्। अत एव जडम्। एवंविधं तपोधनं मूर्खाः हसन्ति। न तत्राश्चर्यम् ॥ २१ ॥

अधुना स्वनिर्वेदं निवेदयन्नाह। निर्वेदः स्वावमाननम्—

२०. नो पश्याम्यसतां मुखं न धनिनां वाचं शृणोम्यथवा
नो मिथ्यागुणकीर्तनैरहरहः संस्तौमि कुस्वामिनम् ।
नाहं चाहतबन्धुरुद्धतभुजो वृत्तानुबन्धे स्थितो
दोषोपाश्रयसंग्रहव्यसनिनि च्छिन्नेऽधुना मूर्द्धनि ॥ २२ ॥

अधुना मूर्धनि मस्तके छिन्ने सति एवंविधमभूदित्यध्याहार्यम्। कथंभूते मूर्धनि?। दोषोपाश्रयसंग्रहव्यसनिनि दोषाणामुपाश्रयस्तस्य संग्रहस्तस्य व्यसनं विद्यते यस्य स तस्मिन्।

किं करोमि तदाह। असतां मुखं नो पश्यामि। धनिनां द्रविणवतां अश्रव्यां श्रवणम(? वणा) योग्यां वाचं न शृणोमि। शीर्षच्छेदस्य गुणः। अहरहः कुस्वामिनां (?नं) मिथ्यागुणकीर्तनैर्नो संस्तौमि वचनाभावात्। च पुनरहमाहृतधनुर्न वा उद्धतभुजो वृत्तानुबन्धे स्थितः। वृत्तं-आचारस्तस्यानुबन्धः सेवनं तत्र स्थितः। एतत्स्वरूपं जीवतामेव न मृतानाम्। अतः शीर्षे छिन्ने सर्वं सुलभमभूदिति निर्वेदः॥ २२॥

अथ नारीनेत्रस्वरूपज्ञानानैपुण्यं स्वस्मिन्नारोपयन्नाह—

२३. व्यालुम्पन्ति समाधिमाधिविधुरं चैता नमस्कुर्वते
लोभाभावविशेषभूरिविरहे संप्राप्य यूनां गणम्।
एतासां नु वयं न चम्पकरुचिष्वङ्गेष्वनङ्गीकृतं
प्रामाण्ये हरिणीदृशां यत दृशोरन्तःस्थिता ब्रह्मणि॥ २३॥

एता नार्यो यूनां गणं संप्राप्य समाधिं व्यालुम्पन्ति स्वसमाधिं त्यजन्ति। च पुनः आधिविधुरं मानसव्यथाविह्वलं यथा स्यात्तथा नमस्कुर्वते नमस्कारं कुर्वन्ति मन्मथपीडिताः सत्यः। कस्मिन्? । लोभाभावविशेषभूरिविरहे लोभस्याभावो लोभाभावो लोभाभावस्य विशेष-स्तस्माद् यो भूरिविरहः प्रचुरवियोगस्तस्मिन्। लोभं विना विशेषविरहपीडने सति कामिन्यः पूर्वोक्तां चेष्टां कुर्वन्ति। कथंभूतं यूनां गणम्?। चम्पकरुचिष्वङ्गेषु अनङ्गीकृतं नार्यङ्गेष्वनासक्तया व्याप्तम्। अथ कविस्तत्स्वरूपाज्ञातत्वं प्रकटयति। नु इति वितर्के। वयं एतासां हरिणीदृशां दृशो[ः] ब्रह्मणि ज्ञाने यत आश्चर्ये न अन्तःस्थिता अन्तं न प्राप्ताः। कथंभूते ब्रह्मणि?। प्रामाण्ये सत्यरूपे। अनेन प्रामाण्यज्ञानस्यापि वयं ज्ञातुमसमर्थाः। नारीभिर्जगद् वञ्च्यते इत्यर्थः॥ २३॥

अथ योगमार्गस्वरूपं आविष्कुर्वन्नाह—

२४. गात्रं पात्रं प्रथमवयसि प्रेयसीनां स्तनानाम्
आश्लेषाणां तदिह मधुनो धन्य मन्य कृतार्थम्।
येनासीने त्वयि गिरितटे श्लिष्टनासाग्रदृष्टौ
हर्षस्पर्शं जहति हरिणश्रेणयः कायकण्डूः॥ २४॥

हे धन्य हे तापस! मन्य कृतार्थं कृतकृत्यं जानीहि। कथम्?। तद् गात्रं प्रथमवयसि प्रेयसीनां स्तनानां आश्लेषाणां इह जन्मनि मधुनो मद्यस्य वा पात्रं स्थानं अभूत्। एते पदार्था अस्मिन् शरीरे बभूवुः। अधुना धन्यावस्थाया ये न। त्वयि गिरितटे आसीने सति हरिणश्रेणयो मृगपङ्क्तयो हर्षस्पर्शं यथा स्यात्तथा कायकण्डूर्जहति त्यजन्ति चेत्यर्थः। पूर्वं इदं शृङ्गारास्पदं इदानीं वैराग्यपूरितमवस्थाभेदात्॥ २४॥

जरास्वरूपमाह—

२३. गात्रं संकुचितं गतिर्विगलिता दन्ता विनाशं गता
दृष्टिर्भ्रश्यति रूपमेव ह्रसितं वक्त्रं च लालायते ।
वाक्यं नैव करोति बान्धवजनो भार्या न शुश्रूषते
हा कष्टं जरयाऽभिभूतपुरुषः पुत्रैरवज्ञायते ॥ २५ ॥

हा इति खेदे । कष्टं जरां प्रति धिक् । कथम् ? । जरया अभिभूतः जराव्याप्तः पुमान् पुत्रैरपि अवज्ञायते निन्द्यते । यथा जरया गात्रं संकुचितं कृशीकृतम् । गतिर्विगलिता भग्ना । जरातो दन्ता विनाशं गताः पतिताः । जरया दृष्टिर्भ्रश्यति निस्तेजा भवति । रूपमेव ह्रसितं गतम् । च पुनः वक्त्रं मुखं लालायते लालायुक्तं भवति । बान्धवजनः तस्य वाक्यं न करोत्येव । तं पुरुषं पत्नी न शुश्रूषते शुश्रूषा न करोति । इति कारणात् धिक् ॥ २५ ॥

अथ नगरवनावस्थयोः साम्यमाह—

२४. एकैव काचिन्महतामवस्था सूक्ष्माणि वस्त्राण्यथ वा च कन्था ।
कराग्रलग्नाऽभिनवा च बाला गङ्गातरङ्गेष्वथ वाऽक्षमाला ॥ २६ ॥

महतां काचिदवस्था एकैव समानैव । कथम् ? । सूक्ष्माणि वस्त्राणि भवन्तु । वा अथ वा कन्था भवतु । अथ बाला नारी कराग्रलग्ना भवतु । अथ वा गङ्गातरङ्गेषु अक्षमाला भवतु ॥ २६ ॥

अधुना योगीन्द्रवाक्यस्वरूपमाह—

२५. न भिक्षा दुष्प्रापा पथि पथि मठारामसरितः
फलैः संपूर्णा भूर्मृगविटपिचर्माधिवसनम् ।
सुखे वा दुःखे वा सदृशपरिपाकः खलु तदा
त्रिनेत्रं कस्त्यक्त्वा धनलवमदान्धं प्रणमति ॥ २७ ॥

तदा तर्हि कः पुमान् त्रिनेत्रं त्यक्त्वा धनलवमदान्धं प्रणमति हरं विहाय धनिनं प्रणमति । कथम् ? । भिक्षा न दुष्प्रापा । पथि पथि मार्गे मार्गे मठारामसरितः सुलभा एव । फलैर्भूः पृथिवी संपूर्णा वर्तते । मृगविटपिचर्मणामपि वसनं मृगत्वक् वृक्षत्वक् तयोर्वस्त्रं वर्तते । सुखे वा दुःखे सदृशपरिपाक एव । ततः को धनिनां चाटुत्वं कुरुते ॥ २७ ॥

अथ वनवासिनां सुखस्वरूपमाह—

२६. स्थितिः पुण्येऽरण्ये सह परिचयो हंसहरिणैः
फलैर्मेध्या वृत्तिः प्रतिनदि तलान्येव दृषदः ।

इतीयं सामग्री भवति हरि(?र)भक्तिं स्पृहयतां
वनं वा गेहं वा सदृशमुपशान्तैकमनसाम् ॥ २८ ॥

उपशान्तैकमनसां सतां वनं वा गेहं सदृशं सममेव। कथंभूतानाम्?। हरभक्तिः (?क्तिं) स्पृहयतां महेश्वरसेवां वाञ्छमानानाम्। कथम्?। तदाह—पुण्ये पवित्रे अरण्ये वने स्थितिः स्थानम्। हंसहरिणैः सह परिचयो भवति। फलैर्मेध्या पवित्रा वृत्तिर्जीवनम्। प्रतिनदि नदीं नदीं प्रति दृषदस्तलान्येव निवेशनस्थानानि। इतीयं सामग्री भवति। पूर्वोक्तानां हरभक्तिं स्पृहयताम् ॥ २८ ॥

सांप्रतं योगस्वरूपमाह—

२७. शरच्चन्द्रज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः सान्द्रध्वनिषु रजनीषु द्युसरितः।
भवाम्भोधौ मग्नाः शिव शिव शिवेत्यार्तवचसः
कदा श्यामानन्दोद्गतबहुलबाष्पाकुलदृशः ॥ २९ ॥

वयं कदा ईदृशा भविष्यामः?। क्वापि द्युसरितो गङ्गायाः पुलिने तटे रजनीषु सुखासीनाः सुखं स्थिताः। कथंभूते पुलिने?। शरच्चन्द्रज्योत्स्नाधवलिततले शरच्चन्द्रज्योत्स्नया धवलितं तलं यस्य तत् तस्मिन् तटे। कथंभूतासु रजनीषु?। सान्द्रध्वनिषु निविडशब्देषु(?ब्दासु)। रात्रौ सामान्यतः शब्दो भवत्येव। कथंभूता वयम्?। भवाम्भोधौ मग्नाः संसारसमुद्रब्रुडिताः। पुनः कथंभूताः?। शिव शिव शिवेत्यार्तवचसः। हे शिव, हे शिव वीप्सायां वर्तमानस्य द्वित्वं त्रित्वं वा, इत्यार्तं वचो येषां ते। पुनः श्यामानन्दोद्गतबहुलबाष्पाकुलदृशः। आनन्दात् उद्गतं बहुलं घनं बाष्पमश्रुजलं तेनाकुला दृशः। ततः कर्मधारयः। श्यामाश्च आनन्दोद्गतबहुलबाष्पाकुला दृशो येषां ते तथा। एवंविधाः कदा भविष्यामः॥ २९ ॥

पुनः शमस्वरूपमाह—

२८. अनल्पं जल्पन्तः कति च विगता नो यमपुरं
पुरस्तादस्माकं विधृतवदनाव्याप्तनयनाः।
अतीता यद्येवं न हि निजहितं चेतसि वयं
चलन्मेहोदाराद् विषयविषजातादनशिनः ॥ ३० ॥

अस्माकं पुरस्तात् अनल्पं जल्पन्तः बहुतरं कथयन्तः सन्तः कति च यमपुरं नो विगताः। कथंभूताः?। विधृतवदनाव्याप्तनयनाः। विधृतं अस्थिरं च तत् वदनं वक्रं च विधृतवदनम्। विधृतवदने अव्याप्ते अप्रकाशयुक्ते नयने लोचने येषां ते विधृतवदनाव्याप्तनयनाः। यदि चेत् एवं अमुना प्रकारेण अतीताः अतिक्रान्ता गताः तथापि वयं चेतसि निजहितं प्रति-

चलन्मेहोदाराद् विषयविधिजाताद् अनशिनः अभोक्तारो न जाताः । चलच्च तन्मेहं लिङ्गं च तेन उदारात् श्रेष्ठात् विषयविधिजातात् अनशिनो जाताः । अश्नाती(?श्नन्ती)त्येवंशीलो(?ला) अशिनः, न अशिनः अनशिनः अभोक्तार इत्यर्थः । एतेन बहून् मृतान् दृष्ट्वा वयमपि भोगेष्वसक्ता एव जाताः [?] । मरणभयं दृष्ट्वा न भोगवाञ्छा त्यक्ता इत्यर्थः ॥ ३० ॥

अथ संसारे निर्ममताप्रधानत्वं वर्णयति—

२९. भव्यं भुक्तं ततः किं कदशनमथ वा वासरान्ते ततः किं
कौपीनं वा ततः किं सितममलतरं पट्टकूलं ततः किम् ।
एका भार्या ततः किं शतगुणगणिता कोटिरेका ततः किं
चैको भ्रान्तस्ततः किं गजतुरगशतैर्वेष्टितो वा ततः किम् ॥३२॥

भव्यं भुक्तमित्यादि । भव्यं शाल्योदनादि भुक्तं ततस्तस्मात् किं संजातम् । क्षणिका तृप्तिरुत्पन्ना । अथ वा कदशनं नीरसान्नं वासरान्ते दिनान्ते प्राप्तं ततः किं जातम् । वा अथ वा को(?कौ)पीनं कक्षापटः [ परिहितं ततः किं जातम्, अथवा ] सितं श्वेतममलतरं पट्टकूलं अत्युज्ज्वलं दुकूलं परीहितं ततः किं जातमित्यर्थः । सर्वस्यानित्यत्वात् । एका भार्या ततः किं जातम् । वा शतगुणगणिताः शततो यावत्कोटिसंख्या भार्या जातास्ततः किम् । एकया यत् कार्यं कोटिगुणितयापि तत् कार्यम् । एकः शरीरमात्रो भ्रान्तः पृथ्वीं गतस्ततः किं जातम्, वा अथ वा गजतुरगशतैर्वेष्टितस्ततः किं निष्पन्नमेव । स्वतः एक एव । अन्ये सर्वे बाह्या भावास्तैर्न किंचित् स्वार्थसाधनं भवतीत्यर्थः ॥ ३२ ॥

अथ नारीस्वरूपमात्मनिन्दया निरूपयति—

३०. अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् संगमेन प्रियायाः ।
इति यदि शतकृत्वस्तत्त्वमालोकयामि
तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ ३३ ॥

अहं यदि शतकृत्वः शतवारान् इति तत्त्वमालोकयामि तत्त्वं विचारयामि । तदपि हरिणाक्षीं मृगलोचना कामिनीं अन्तरात्माऽन्तर्यामी न विस्मरति मानसान्न मुञ्चतीत्यर्थः । इतीति किम् [?] । अतिचपलत्वात् चाञ्चल्यस्वभावात् । स्वप्नमायोपमत्वात् स्वप्नं च माया च स्वप्नमाये स्वप्नमायाभ्यामुपमीयते स्वप्नमायोपमं तस्य भावस्तत्त्वं तस्मात् । परिणतिविरसत्वात् परिणामेन नीरसत्वात् । प्रियायाः संगमेन अलं पूर्यताम् । एवं बहुधा विचारयामि । तथापि नारीं नो विस्मरामि । इत्यात्मनो निन्दानिरूपणम् । अलं भूषणपर्याप्तिवारणेषु ॥ ३३ ॥

॥ इति दीपकाख्यटीका ॥ श्रीः ॥ शुभं भवतु ॥

## सपरिशिष्टस्य भर्तृहरिकृत-शतकत्रयस्य श्लोकानामकारादिक्रमेण

### अनुक्रमः ।